॥ अरैयर

29.6.1976 } बाबा को
प्र. वि. मंदिर } रामकृष्णना
रामहरि

# प्रस्तावना

श्री अरैयर महाशयने 'स्वानुभूतित्रिवेणी नाम जीवनोज्जीवन' काव्यकी रचना संस्कृतभाषा में की है। मेरा संस्कृतभाषा का ज्ञान परिमित ही नहीं किंतु अत्यल्प है। साधारण भावार्थ समझ लेता हूं।

इस काव्य की रचना अरैयर महाशयने अपनी पदयात्रा के दौरान की है। हमारी परंपारा में दर्शन, स्नान, और पदयात्रा का महत्व कुछ निराला ही है। उन्हे एक धार्मिक विधि और संस्कार माना जाता है। उनका अनुष्ठान चित्तशुद्धि और जीवन शुद्धि का साधन समझा गया है। श्री अरैयर, ने भी साधना को दृष्टी से ही तीर्थयात्रा का अनुष्ठान किया है। इसलिये उनके लिये वह संजीवन का साधन बन गयी है। साधक की भूमिका के यह सर्वथा उचित ही है। इस काव्य में उन्होंने अपने आध्यात्मिक विकास का विवरण किया है, जो अन्य साधकों के लिए उद्बोधक ओर रोचक सिद्ध हो सकता है।

यह काव्य गीर्वाणभाषा में लिखा गया है। हमारे यहां ऐसी मान्यता है कि गीर्वाणभाषा या देवभाषा वह भाषा है जो किसी मानवसमुदायविशेष या क्षेत्र की भाषा नहीं है। वह भगवान की है, अर्थात् विश्वमानव की है। उसकी भूमिका क्षितिजव्यापी है। कमसे कम भारतवर्ष में तो वह भिन्नभाषा भाषी पंडितों के परस्पर संवाद का माध्यम रही है। भारत की सारी भाषाओं को उस का योगदान परम वैभवसंपन्न रहा है कोई भाषा संस्कृत से भो पुरानी होने का दावा भले हीं करे, उस दावे में सचाई भी हो सकती है, परंतु उस भाषा को भी संस्कृत भाषा का योगदान प्रभूत मात्रा में रहा है इसे कोई विवेकी नकार नही सकता

एसी व्यापक और विशद भूमिकावाली भाषा में अरैयर महोदय ने अपना अनुभव ग्रथित किया हैं। उनकी व्यापक राष्ट्रीय भूमिका के यह अनुरूप ही हैं। उनके लिए सारी भाषाएं देववाणी के ही प्रतिरूप हैं।

"वाचः प्राकृतसंस्कृताः श्रुतिगिरो वाराणसी मेदिनी" ऐसा व्यापक और उदार आशय जिनके चित्तका स्थायीभाव है वे ही सचमुच संस्कृत भाषा में लिखने के अधिकारी हैं।

आशा है अरैयरजी का यह प्रयास पाठकों को रुचिर और रुचिकर प्रणीत होगा।

१२-२०-१९७८
ज्युथिका मुंबई

दादा धर्माधिकारी

# [प्रस्तावनायाः संस्कृतछाया]

अरैयर महाशयः स्वानुभूतित्रिवेमी नामकं जीवनोज्जीवनकाव्यं संस्कृत भाषायां रचितवान् । मम संस्कृतभाषा-ज्ञानं न केवलं परिमितं, किन्तु अत्यल्पमपि । साधारणं भावार्थं जानामि ।

अस्य काव्यस्य रचनां अरैयर महाशयः स्वपादयात्रासन्दर्भे व्यतानीत् । अस्माकं परम्परायां दर्शन स्नान पादयात्राणां महत्वं विलक्षणं अस्त्येव । एतानि धार्मिक विधिरूपेण, तथा संस्कार रूपेण अनुष्ठीयन्ते । चित्तशुद्ध्यर्थं जीवनशुद्ध्यर्थं च इमानि साधनानि मन्यन्ते । श्री अरैयरोऽपि साधनादृष्ट्यैव तीर्थयात्राऽनुष्ठाता । अतएव तस्य कृते इदं सञ्जीवनस्य साधनमभूत् । साधकानां भूमिकार्थं इदं सर्वथा उचितमेवाऽस्ति । अस्मिन् काव्ये अयं स्वीयाऽऽध्यात्मिक विकासं विवृणुते, यो वा अन्यसाधाकानां कृतेऽपि उद्बोधकः रोचकः सिद्धो भवितुर्हति ।

एतत् काव्यं गीर्वाणभाषायां लिखितमस्ति । गीर्वाभाषा अथवा देवभाषा येयं वरीवर्ति सा कस्यचिन् मानवसमुदायविशेषस्य वा क्षेत्रस्य वा भाषा नास्तीति अत्रत्यानां अस्माकं मान्यता । सा भाषा भगवदीया अर्थात् विश्वमानुषाणाम् । एतस्या भूमिका दिगन्तव्यापिनी भवति । कनिष्ठपक्षे भारतवर्षे तु भिन्नभाषाभाषिपंडितानां परस्पर संवादमध्यमा सेयं भाषा विद्यते ।

भारतानां सर्वासां भाषाणां कृते अस्या भाषाया योगदानं परमवैभवसंपन्नं विराजते । यद्यपि या काऽपि वा भाषा संस्कृतादपि प्राचीनेति स्वविचारे मंडितेऽपि तद्विचारे तथ्यांऽशोऽपि भवितुमर्हेत्, तथाऽपि अन्यभाषाणामपि संस्कृतभाषाया योगदानं प्रभूतमात्रायां विद्यत एव । अस्मिन् विषये कोऽपि विवेकी पुरुषः नकारं वक्तुं न शक्नोति ।

एतादृश व्यापक विशद भूमिकाशालिन्यां भाषायां यस्य अरैयर महोदस्य यदिदं स्वानुभूतिग्रथनं तस्य व्यापक राष्ट्रीय भूमिकाऽनुरूपमेव तदिदं भवति । अस्य दृष्ट्यां सकला भाषाः देववाण्याः प्रतिरूपा एव सन्ति ।

"वाचः प्राकृत संस्कृताः श्रुतिगिरो वाराणसो मेदिनी"

एवं व्यापकोदाराऽऽशयः यस्य चित्तस्य स्थायीभावः स्थितः भवति, स एव सत्यं संस्कृतभाषायां लिखितुं अधिकारी भवति ।

अरैयरस्य अयं प्रयासः पाठकानां रुचिरः रुचिकरश्च प्रणीतः भवेदिति आशासे ।

(द्वितीयपुटादनुवृत्ता)

विषय सूची


| | | | |
|---|---|---|---|
| ६१ वकुल भूषण द्वादशी | ८६ | ७१ सम्पत् कुमार पञ्चदशी | ९२ |
| ६२ वकुलभूषण चतुःश्लोकी | ८७ | ७२ नृसिंहैकादशी | ९४ |
| ६३ प्रार्थना षोडशी | ,, | ७३ केशव द्वादशी | ९५ |
| ६४ शठारि गीताष्टकम् | ८८ | ७४ नारायणैकादशी | ९६ |
| ६५ शठारि पदमङ्गलम् | ८९ | ७५ कल्याणी विंशतिः | ९७ |
| ६६ राम रामानुज प्रार्थना षट्कम् | ९० | ७६ स्वनैच्य नैवेद्यम् | ९९ |
| ६७ यतिराजाष्टकम् | ,, | ७७ वेङ्कट नाथाष्टकम् | ,, |
| ६८ श्रीपादतीर्थ दशकम् | ९१ | ७८ वरार्यवर्य गोष्ठी | १०० |
| ६९ अम्बापञ्चकम् | ९२ | ७९ चरम सुपर्वम् | १०१ |
| ७० देवी त्रय रहस्यम् | ,, | ८० काव्योपसंहारः | १०१ |

# अभिनवं काव्यं स्वानुभूति त्रिवेणी

भिभधव-विचार-रमणीया श्रुतिसुभगा 'स्वानुभूति-त्रिवेणी' रसिकानां हृदयावर्जन क्षमा-शोभते-इति वचनं संस्कृत-भवितव्य संपादकेन डॉ. के. रा. जोशी महोदयेन काव्य-श्रवण-पर्वणि अध्यक्षपदतः उदीरितम् । अतीते रविवासरे नागपुरे मित-संख्यानां काव्यरसप्रियाणां 'सिफेरी' संस्थायाः अधिकारिणां गृहत्रीथ्यां श्री- श्रीनिवासन् महाशयस्य डी. ८ मिते निवासे समायोजितायां विशेषगोष्ठ्याम् डॉ. जोशी-महोदयानाम् अध्यक्षत्वे अयं मधुरः समारम्भः संपन्नः ।

मेलुकोटेवासी पण्डितोत्तमः श्रीमान् अरैयर-महाशयः इदं काव्यं प्रणीतवान् । श्रीमता अरैयर-महाशयेन आदौ कश्चित् काव्य-परिचयः निवेदितः । अस्यां त्रिवेण्याम् आचारयमुना, विचारगङ्गा, भक्तिसरस्वती ताम्रपर्णीप्रसादः इति चत्वारः सर्गाः । स्वयं कविः अधिगतशास्त्रः, श्रीरामानुजसंप्रदायानुवर्ती, आचार्यविनोबा-महाशयानां प्रीतिपात्रं, सततं पादचारी, गृहीतकाञ्चनमुक्तिव्रतः, सर्वोदय-पथानुसारी, स्पृहणीय-चरितः । वानप्रस्थाश्रमम् अनुसरता भारतसंचारेण या अनुभव-संपत्तिः श्रीमता आसादिता तां काव्यकलया मण्डितां रसिकेभ्यः अर्पयितुमनाः अस्ति ।

आचारयमुनायां निसर्गसुलभं जीवनं मनुष्यः त्यजति, तेन नानाव्याधिग्रस्तः । सृष्टौ स्थितानां जलमृत्तिकादीनां कथं स्वास्थ्यरक्षणे उपयोगः, हिताशनं मिताशनं संसृति-प्रशोधनम् कथम्, इत्यादयो विषयाः तत्र स्पृष्टाः सन्ति । तत्रैव आधुनिकी गृहरचना कथम् अवैज्ञानिकी इत्यपि साधु दर्शितम्

विचारगङ्गायाम् अर्थविचारः आवेदितः । दानं वित्तशाठ्यं वर्जयित्वा यथाभागम् अपेक्षितम् । धनिकाः रङ्काः वा लोकतन्त्रे समानभागदानेन सममेव कृतकार्याः न सन्ति । क्रान्तिः नाम 'जीवनशुद्धिः सहजा क्रान्तिः क्रान्तिर्मनीषा गहनात्मशोधे' इत्यादयः उदात्ताः विचाराः तत्र श्रूयन्ते ।

भक्तिसरस्वत्यां रामायणस्थः आधुनिकदृष्ट्या विचारः राजते । सद्यः बहुराज्यदास्यं, संघस्य दास्यमिति नानाविधाः दास्यप्रकाराः सर्वत्र लब्धप्रचाराः । स्वानुशासनम् आवश्यकम् । 'भक्तिः प्रणीता न हि केवला स्तुतिः' अपि तु सा 'संश्लिष्टभावेन तदर्पिता स्पृहा' । विनोबा-गान्धी महाशयनां विषये निष्ठा नाम भक्तेः एव विशेषः भूदानं नाम मातृबन्ध-विमोचनं यथार्थम् । जातिः नाम अङ्गविन्यासमात्रम् । सर्व-धर्मसमानता, जात्यतीतत्वम् इत्यादि विषयाः तत्र सन्ति ।

चतुर्थसर्गे ताम्रपर्णी-प्रसादे आत्मानं 'दासपदेन' निर्दिशता कविवरेण स्वनैच्य- नैवेद्येन कृता रमणीया अभिनवा नृसिंह प्रार्थना । तत्रत्या संपत्कुमार-पञ्चदशी श्रुतिमधुरा नवोन्मेषमण्डिता । कविशब्दैः इयं स्वानुभूति त्रिवेणी 'नीतिबोधिनी वृत्तिविचारिणी, मधुप्रदायिनी, सकलपोषिणी कापि तरङ्गिणी' भवति । *

श्रोतारः अभिनव-विचार-व्यञ्जन-क्षमां संस्कृतां गिरं श्रुतिमधुरां श्रुत्वा नितान्तं प्रसन्नाः । विनोबा-विचारः जगति पुरातनोऽपि नवीनतमः । तत् अभिव्यक्तुम् सारमयी देववाणी श्रीमता प्रयुक्ता साफल्यम् अधिगतवती । गोष्ठ्यां श्रीमती इन्दुमती, श्री केलकर-डॉ. खरे-कु. पु. देशपाण्डे-ना. कु. करंदीकर प्रभृतयः काव्यप्रीत्या समुपस्थिताः श्रीमन्तम् अरैयर-महाशयं सभाजितवन्तः ।

*अस्यैव कवेः 'सप्तशती' नामक काव्यान्तरे

साप्ताहिकम् संस्कृत भवितव्यम्. १३-३-७६

# समाज परिवर्तन काहळी

वेदान्तः विज्ञानं साहित्यं चेति एतच्छक्तित्रयं अस्य युगस्य अवश्यं प्रार्थनीयम् । एतत् त्रयाणां त्रिवेणी सङ्गमेनैव विश्वकल्याणं भवितुमर्हति । शङ्कर भगवत् पादैः वेदान्तस्य अहिंसा इत्येव अर्थः कृतः । आधुनिकयुगप्रवर्तकेन परमर्षिणा सन्त विनोबा भावेनाऽपि साहित्य पदव्याचिख्यासुना अहिंसा इत्येव अभाणि । अहिंसा नाम सर्वभूतहित पर्यवसायिनी अवश्यं भवेदेव । अयमेव सर्वोदयः । अयमेव मानवस्य उन्नत दिव्य भव्यकल्पनाविचारः । विज्ञानमपि अहिंसार्थमेव स्वाऽऽग्रहं करोति । एतदखिलविचारविलासानां मूर्तं रूपं संधार्य इयं 'स्वानुभूतित्रिवेणी' आविर्भूता ।

अहिंसात्मक समाजरचनार्थं, तद् द्वारा विश्वकल्याणार्थं २५ वर्षेभ्य आरभ्य भारतभूमौ भूदानयज्ञेति प्रथितक्रान्तिकारियज्ञस्याऽध्वर्युः पूज्य विनोवा राजते । अस्मात् पावनाद् यज्ञकुंडात् उद्गता अमृतकलशायमाना इयं स्वानुभूति त्रिवेणी' ! अस्मिन् यज्ञकर्मणि आरंभादेव साक्षात् सेवाकर्तारः श्री अरैयर स्वामिनः एतद् ग्रन्थद्वारा स्वजीवन कर्मज्ञानभक्तीनां त्रिवेणीसङ्गमे अस्मानपि स्नातान् कारयन्ति । न तावन्मात्रम्, अपितु यज्ञशिष्टाऽमृतभोजिनोऽपि नः कृपया कृतार्थीकुर्वन्ति । ग्रन्थस्यास्य सर्वेऽपि विचाराः प्रत्येकं प्रत्यक्षजीवानाऽनुभवसागरोत्थाः अमृतकणा इव, समाधौ साक्षात्कृतस्य सत्यवह्नेः विस्फुलिङ्गा इव ।

नाऽतिदूरे भविष्ये विश्वदिगन्ते उदेष्यमाणस्य शान्तक्रान्ता ऽहिंसक समाजपरिवर्तनस्य 'कहाली' इयं काव्यकला ! तादृशस्य समाजपरिवर्तनस्य वाहनीभवितुं इदं काव्यं अर्हतासंपन्नम् । संस्कृत साहित्य एव एतादृशः ग्रन्थः प्रप्रथम इति मन्ये । देशकालाऽपरिच्छिन्नां एनां अमरकलाकृतिं सर्वेऽपि अध्यात्मजिज्ञासवः विज्ञानिनः विद्याविचक्षणाः, समाजसेवकाश्च मुक्तहस्तैः स्वागतीकुर्वन्तीति विश्वसिमि ।

गुजरात् वाहन विभागधिकारिणः श्री. एस. सि. देसाई, जे-ऐल देसाई तन्मित्राणि श्री, व्रजलाल परीख प्रभृतीनि यदि श्रद्धाभक्त्या कटिबद्धानि नाऽभविष्यन् स्वानुभूतित्रिवेणीमुद्रणं नाऽभविष्यत् ।

ब्रह्मविद्या मंदिरम्

भवदीयः, कुट्टी

## काव्यविषये महतां आशयाः

"अरैयर शैलीं उपनिषच्छैलीं मन्ये । देशभक्तिः नाम स्वस्वग्रामभक्तिं विना कथं भवति ? यस्य इदानींतनयौवतस्य ग्रामभक्तिः देशभक्तिश्च क्षीयमाणेव भासते, यद्यपि नाऽस्यायमपराधः । तथाऽपि, अत्र किं कारणम् ? कथं निवारणीयम् ? कथं युवजनाः सन्मार्ग-दर्शनेन शिक्षयितव्याः ? अस्माकं जीवनयोजना का वा स्यात् ? इत्यादीनां प्रश्नानां सदुत्तरं अरैयर महोदयस्य साहित्ये वर्तते । अस्मिन् देशनिर्माणावसरे एतादृशं साहित्यं वास्तवपूर्णस्वराज्यप्रेरकं भवति"

—वरकवि डा. श्रीधर भास्कर वरणेकराः, नागपुर विश्वविद्यालय संस्कृतविभागमूर्धन्याः

"प्राचीन विचारतरङ्गिण्यां सहजोत्फुल्ल नव्यतरङ्ग चारुसंयोजन धीर प्रयत्नेऽस्मिन् अरैयर काव्ये मम श्रद्धा विद्यते"

–श्री ति. न. आत्रेयाः, गान्धीस्मारकनिधिः, नवदेहली

"प्रसन्न मधुर ललित गम्भीरमिदं काव्यम् "

--श्री रसिक भाई परीखाः, अहमदाबाद ।

## क्षमार्पण कृतज्ञताः

पदे च वाक्ये च तथैव वृत्ते दोषाश्च्य ये तान् विमृशन्तु, तेषाम्
शुद्धस्वरूपं कृपया लिखन्तु क्रान्तेश्च भावं गुणतः स्मरन्तु

नाऽहं पदे कदाप्यस्मि वाक्ये वा वृत्त एव वा । बालकोऽस्मि ततो धीराः भावं जानन्तु पंडिताः
संस्कृतं कठिणं नास्ति, सेवाऽभिज्ञाः पठन्त्विदम् । येन तेषां संस्कृतस्य भाषासारळ्यमेघते
भाषाऽभिज्ञाः महान्तो ये क्रान्तिविज्ञानभक्तिगाः । ते विदग्धाः कृतीः कुर्युः इतोऽप्यन्याद्दशीतराः
इत्येव नम्रभावेन सर्वहस्ते समर्पये । विश्वमानुषरूपश्च प्रीयतां विश्वतस्पतिः
काव्यस्यैतस्य मेऽन्यस्य स्वामित्वं न कथंचन । अल्पमौल्येन ये प्रेम्णा मुद्रापणपराश्च ते
गृहान् गृहान् दीपयन्तु राष्ट्रभाषामखंडिताम् । विश्वभाषाप्रदीपेन विश्वमालोकयन्तु ते
व्यासवाल्मीकिभासानां "कापीरैट्" विद्यते किमु ? तेषां पथानुसारी स्यां तत् पदाधस्तृणाऽधमः

देवाच्च मातापितृतो गुरुभ्यः सखिभ्य एवाऽपि समस्तकेभ्यः
शिशुभ्य एवाऽपि नमो युवभ्यः यदाऽऽददेऽतः करवै तदेभ्यः

येषां गृहे काव्यस्फूर्तिः उदियाय तेषां, श्री–के–वि. राघवानां, वेलूर् निवासिनाम्, मेलुकोटे आद्य संस्कृत विदुष्योः आद्य हस्तलिखित प्रतिकृति द्वयकर्त्र्योः सौभाग्यवती रामानुजमुनि वेदवल्ली, कुमारी शारदा जोयिस् अनयोः, १० मूल-प्रतिकृति (फोटोस्टेट्) कारयित्र्योः पद्मा श्रीनिवासन् दम्पत्योः. काव्याऽऽलोकनं कृतवतां श्री गोविंद, सेवानन्द, टि.एन्. आत्रेय, डा.श्रीधर भास्कर वरणेकर, अरैयर् श्री रामशर्मणां, प्रप्रथम संक्षिप्तं समीक्षां कृतवतां नागपुर संस्कृत भवितव्यम् संपादकानां, मैसूर 'सुधर्मा' सम्पादकानां च काव्यादनेकलेखप्रकाशकानां, शुभकामनाऽनुगृहीतॄणां पूज्य विनोबानां, सवात्सल्यं प्रस्तावनाऽऽशीर्वादं दत्तवतां पूज्य श्री. दादाधर्माधिकारिणां, आश्रय दान ब्लाक्-दानादिना अपारोपकारकाणां गान्धी-सङ्ग्रहालय-व्यवस्थापकानां, श्री किसन् भाई त्रिवेदी प्रभृतीनां, शोधन कार्ये साह्यहस्तं प्रसारितवतां भारतीय संस्कृति विद्यामंदिरस्य श्री डा. दलसुख भाई मालवणीयानां च कृतज्ञतां समर्पयति.

अरैयर् दासः

गान्धी जयन्ती
२–१०–१९७८

हरिजन आश्रमः
अहमदाबाद–१३

### काव्योद्देश्यानि चत्वारि

हरिकीर्तिप्रगानं च जीवनार्थप्रबोधनम्
कर्तव्यपथनिर्देशः चित्तमालिन्यशोधनम्.
—विनोबा विचारपोथी ग्रन्थतः

# शुद्धी करणम्*

| पु. | श्लो | शुद्धम् |
|---|---|---|
| २ | १८ | लवणैर्मातृ |
| ३ | ४७ | अन्तरान्त्रं |
| ६ | ८८ | मन्तव्य |
| ७ | शीर्षके | सिद्धोपायः |
| ८ | १२४ | दैर्घ्यं |
| १० | १४९ | मृदि च नियतयोगो |
| १२ | १७५ | तत्तद्दिन |
| १७ | २४८ | स्वास्थ्य |
| २१ | टिप्पण्यां | नाडु |
| २२ | ४९ | ग्राम |
| २५ | ९५ | ओम्भूर् |
| २६ | ११९ | वयम् |
| २९ | १५१ | लज्जकानि |
| ३० | १५९ | साफल्य |
| ३१ | १८० | कुवर्तनात् |
| ३५ | २१८ | परधर्मसक्तता |
| ३७ | २४८ | भीतेरपि |
| ४१ | ४५ | नोचेद् |
| ४१ | ४७ | कारुण्य |
| ४३ | ७४ | दृष्ट्वा |
| ४६ | १११ | जगतीतले |
| ४६ | ११९ | पश्य । |
| ४८ | १४० | सिन्धुर् |
| ५० | १६६ | काललाघवम् |
| ५७ | १६ | शुद्ध्या |
| ५८ | २३ | माहात्म्य |
| ६० | ४८ | श्लिष्यान्न |
| ,, | ५६ | नूतनतां |
| ६१ | ७० | नीयेत |
| ६२ | ७२ | दृष्ट्या |
| ,, | ७७ | दृश्यम् |
| ,, | ८२ | मूर्तीश्च दृष्ट्यभा |
| ६३ | ८४ | मूर्तौ, मूर्तीः |
| ,, | ८८ | पृथक्, कतराऽपि |

| पु. सं | श्लो. सं | शुद्धम् |
|---|---|---|
| ६३ | ८९ | ह्यतीतमेवाऽस्ति |
| ६४ | ९५ | * यद्वद्रि मुख्येषु |
| ६७ | १३१ | सर्वैश्च |
| ६९ | १५६ | देवेतरस्मिन् |
| ,, | १६१ | पर्याप्ततां |
| ७१ | १८० | वाञ्छ |
| ,, | १८२ | देहातीतत्व |
| ७३ | [1]टिप्पण्याम् | नम्माळ्वार् |
| | [2] ,, | दर्थमेव |
| ७६ | २५५ | दद्याद् |
| ७६ | २५८ | ऽन्यदिदं |
| ७७ | २६३ | काञ्चन |
| ७९ | २९४ | नंच |
| ,, | २९७ | ताऽह्ला |
| ८१ | ३१२ | द्वे अपीमे |
| ८२ | ३३४ | आंडाळ् |
| ८३ | ३६१ | स्मृतम् |
| ८४ | ३६४ | शतशोऽत्र |
| ,, | ३६५ | सर्वाऽऽधारः |
| ,, | टिप्पण्यां | ऽभिमुखः |
| ,, | ३६९ | महापोत |
| ,, | ३७० | मन्त्राद |
| ,, | ,, | भक्त |
| ,, | ,, | नारायणायेति |
| ,, | ३७१ | मन्त्रः सदा |
| ,, | ३७१ | आन्तरेऽपि |
| ,, | ३७३ | मानन्द |
| ८७ | टिप्पण्यां | सूरेः |
| ;, | ,, | सहस्र |
| ९० | ८१ | विहाराभ्याम् |
| ,, | ८९ | नारायणः |

* क्लिष्टोह्या एव शुद्धयः अत्र दत्ताः । सुखोह्यास्तु सहृदया एव प्रमाणम् (अग्रे रक्षापत्रस्य २ पुटेद्रष्टव्यम्)

अथ स्वानुभूतित्रिवेणीनामक जीवनोज्जीवनकाव्ये

## आचारयमुनानामकः–प्रथमः सर्गः

काव्योपक्रमः

१

पद्भ्यां यात्रा गुणयति गुणान् शान्तिमेवातनोति
सद्भिः संगं द्रढयति तथैवोन्नतां भावनां च।
ध्येये स्फूर्तिं वितरति सदा जीवने शुद्धिमेव
देहे यन्त्रे चलति निपुणं किं न साध्यं ह्यसाध्यम्?

२

कारुण्यधारां वितनोति यात्रा
क्रियाकलापांश्च धुनोति यात्रा।
यत् कार्यसभासि च लोकमंगलम्
तदेव सम्पद्यत आत्ममङ्गलम् ॥

३

व्यर्थायासं तु नित्यं वहति हि जनता
यन्त्रमायाविमूढा
यन्त्रैरेवेह लोके सततमभितता
दोषमाला कुमाला।
शीघ्रं यानाद्धि भग्नं सहजसुमुख
प्रेम सर्वत्र साम्यं
कारुण्यं चित्तशान्तिः स्थिरतममननं
मानवस्वान्तगम्यम् ॥

४

चरैवेति चरैवेति वेदादेशो महीयते ।
पद्भ्यां यात्रा विमानैर्वा द्वयमग्रेऽवशिष्यते ॥

५

सैषा काव्यस्य रचना सज्जनाधारकस्य मे ।
मार्जनाय भवेत् सर्व तापत्रयनिवारिणी ॥

६

आध्यात्मिकः प्रतापस्तु प्रथमेन प्रमथ्यते ।
आधिभौतिकतापस्तु द्वितीयेन प्रभज्यते ॥

७

आधिदैविकतापस्तु तृतीयेन विदार्यते ।
अन्तिमेन च सर्गेण प्रसादः परिगृह्यते ॥

आहारशुद्धिः

८

सदाऽऽहारे सती बुद्धिर् मृषाऽऽहारे मृषा मतिः॥
अन्वयव्यतिरेकाभ्यां स्वानुभूतचरी गतिः ॥

९

आहारशुद्धिः, सत्संगः, द्वयं परमपावनम् ।
आद्यायाः स्यात् सत्त्वशुद्धिः सत्सङ्गादात्मदर्शनम् ।

१०

मलशुद्धिः पुरा कार्या चाऽऽन्त्रशुद्धिस्तथैव च ।
वारिणा केवलं वत्स ! ततो ह्यन्नं निरामकम् ।

११

आहाराऽशुद्धिविज्ञानं प्रभाते मलदर्शनात् ।
प्रायो भवति पुंसां, 'हि कदा शुक्तं कदा बहिः॥

१२

निस्सृतं मलरूपेण यदेवान्तस् स्थितं त्विति ।'
पथ्याऽऽहारस्तु विज्ञेयः त्वष्टादशघटीदशः ॥

१३

अन्तर्देशाद् वहिर्यस्तु निस्सृतः स ऋजोषतः ।
अन्योऽपि सकलाऽऽहारः त्वपथ्यो निश्चयं शृणु॥

१४

त्याज्यं श्लेष्मकृदन्नं तु निरामं सर्वदा शुभम् ।
आमवृद्धिकरं ह्येतत्, तंडुलं सर्वद्रूपकम् ॥

१५

क्षीरं घृतं तक्रमेव दधि चापि कफाऽऽकरम् ।
वार्ताकं शाकगोष्ठयां यत् त्वचा हीनं तदाऽऽम-
दम् ॥

१६

कृत्रिमं प्रायशः पेयं, चिंचा, रक्तमरीचिका ।
उत्तेजकानि वस्तूनि, रुच्यर्थं लवणादि च ॥

१७

गर्भस्थं क्लिश्यतेऽपत्यं मातुराहारपद्धतेः ।
ऋषीणां वचनं तत्र श्रूयतां सत्यमेव हि ॥

१८

"अत्यम्लकटुतीक्ष्णोष्णलवणैर् मातृभोजनैः ।
अतितापिभिरत्यर्थं वर्धमानातिवेदनः" ॥

१९

सन्तानक्षेममिच्छद्भिः पथ्याऽऽहारैश्च सात्त्विकैः
भवितव्यं, न चेत् किं स्यादद्य सर्वत्र दृश्यते ॥

२०

शिशोः शिक्षा च रक्षा च मातापित्रोः शरीरतः ।
संक्रामन्ति, समाजे हि पथ्याहारः शुभावहः ॥

२१

अपथ्यं सेवमानैश्च मातापितृभिरेव हि ।
नरस्य कुलमेतद्धा ! नाशमार्गे प्रवर्तितम् ।

२२

बाल्ये वाऽपि विवेकात्मा यौवने वार्धकेऽपि वा ।
यावान् यावान् स्वयं क्षेमः
तावांस्तावान् प्रसाध्यताम् ॥

२३

आम्लमेव हि रोगस्य निदानं, शृणु तद् वचः ।
जठरे विषरूपेण विरसं यत् तदेव हि ॥

२४

आन्त्रयोरुभयोश्चैव सुखं धावति नेत्र च ।
ऊर्ध्वं व्याप्य सदा देहं अस्वस्थं प्रकरोति हि ॥

२५

तस्मादाम्लकरं त्याज्यं त्वन्यदेव सुसेव्यताम् ।
अरोगशर्करां वृद्धां मधुरां यत् करोति वै ॥

२६

धान्ये तु "राधवं" श्रेष्ठं निरामं सर्वदा शुभम् ।
ग्रामाऽऽहारस्त्वतः कालाच्चाल्यते ग्रामवासिभिः

२७

"रागी" चूर्णैर्हस्तघृष्टैर्हस्ताभ्यां च सुमर्दि-
तैः ।
अत्यन्तानलसंयोगे क्रियतां रोटिकादिकम् ॥

२८

रोटिका निर्मिता श्लक्ष्णा दन्तिनां गर्गरायते ।
उन्मत्तनिल्चूर्णं च संस्कृतं शोभनायते ॥

२९-३०

रागिणाऽपूपकं वाऽपि तक्रसंयोग-भर्जितम् ।
ततोऽपि सुभगं पिंडं सार्धैकजल पाचितम् ॥३०॥
सूपे कुलुत्थं परमं प्रशुद्धं
धान्येन कृष्णेन च रागिणा हा ।
ग्रामोत्थितं ग्रामरसायनेन
शाकादिपत्रं परमं पवित्रम् ॥

३१

मध्यमं यत्र-"जोलादि" न तु यन्त्रार्दितं भवेत् ।
पत्रशाकादिपक्वं तु मन्दाग्नौ पिहितोध्र्वके ॥

३२

अपक्वं चापि शाकेषु तत्तद्देशदशास्वपि ।
उत्तमं दन्तिनां मुद्गं क्लिन्नमङ्कुरितं चणम्

३३

पत्रशाकरसस्त्वेवं नारिकेलजलं तथा ।
फलानि ऋतुपक्वानि मधुराणि मृदूनि च ॥

३४

अरोगशर्करावृद्धिं कुर्वन्ति च दिने दिने ।
घनाहारास्त्विमे मोक्ताः ऋणाहारो न सेव्यताम्

३५

व्यवहारे ऋणेनैव नास्ति सौख्यं यथा तथा ।
ऋणाहारैरपथ्यैस्तैः चिरं तिष्ठद्भिरेव च ॥

३६

पथ्याहारो मितं सेव्यः दीर्घकालं प्रचर्वितः ।
अर्धकुक्षिप्रमाणः स्यात्, नाम्बु पेयं तदैव हि ॥

३७

एकार्धघटिकां नीत्वा जलं पेयं विशेषतः ।
न खाद्यं पानवेलायां पेयं नैव च भोजने ॥

३८

आहारे द्रव्यनियतिः ध्येया पाल्या विशेषतः ।
सन्तोषनियतिस्तस्माद् द्वाभ्यां चाऽऽरोग्यवर्धनम्

३९

तैलपक्वं महापायि घृतपक्वं ततोऽपि च ।
भर्जितं सर्वदा त्याज्यं आरोग्यं भाग्यमिच्छता

४०

अत्याशनं यथा घोरं कुद्रव्याशनमेव च ।
स्वल्पाच्चेदपि कुद्रव्यादन्तर् देहं विषं भवेत् ॥

४१

इदानीं सर्वदेहेषु चेयं प्रायेण वै स्थितिः ।
मलकुंडे तथाऽऽन्त्रे च वर्तते सुचिरान् मलम् ॥

४२

तन्मलादुत्थितं त्वेव भीष्मोग्रं चोष्म शीतलम् ।
देहान्तर् व्याप्य सर्वत्र नाडिकाद्वारमेव हि ॥

४३

रक्तं विषमयं कुर्यात् तदेव स्यादनेकधा ।
रोगबाधास्तु दृश्येरन् तत्तत्स्थानभिदावशात् ॥

४४

मलशुद्धिमकुर्वाणः नैवाऽरोगी भवेत् क्वचित् ।
घटशुद्धिः पुरा कार्या, शुद्धाहारस्ततः परम् ॥

४५

मलनिष्कासनं स्थूलं विना बस्तिक्रियामपि ।
नालमेतेन शुद्धिर्हि प्रारभ्येत कदाचन ॥

४६

उपवासाय संकल्पः कर्तव्यः शुद्धिमिच्छता ।
एकादशीदिनादौ वा मनःपूतं समाचरेत् ॥

आचारशुद्धिः मृज्जलप्रक्रिया ।

४७

ब्राह्मे मुहूर्ते मृद्देव्या ह्यौष्ण्यादिकमपोहितुम् ।
अन्तरान्त्र मृद्कार्यं सुखेन मलशोधनम् ॥

४८

आर्द्रवस्त्रदृढबन्धतः परं
तूर्णवस्त्रपरिबन्धनं वरम् ।
पादयामकरणेन हृत्स्थलात्
नाभिपूर्णमहद्दा कफं गतम् ॥

४९

आर्द्रमृत्पट्टिका वाऽपि नाभिस्थाने निवेश्यताम्।
यावदौष्ण्यं च संक्रान्तं मृदि, तावद्दहो शुभम् ॥

५०-५१

तदा संस्मर मंत्रांश्च मृत्तिकाविषयानिमान् ।
"मृत्तिके हन मे पापं यन् मया दुष्कृतं कृतम् ॥
त्वया हतेन पापेन जीवामि शरदः शतम् ।
मृत्तिके देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम्" ॥

५२

कटिस्नानतो वा भवेत् त्वेवमेव
त्रुटिर्दूरतो याति, संस्थीयतां भोः ।
यथा नाभिदेशो निमज्जेज्जले च,
सुचारु क्रियेतार्दनं पाणिना च ॥

५३

रक्तौष्ण्यं प्रशमं गतं यदि भवेद् रोगादिकं दूरगं
कुक्षेर्मूलगतं रजो मलमिदं रोगस्य वै कारणम् ।
भीमोग्रो मलसञ्चयो यदि मृदुस्त्वापादशीर्षावधि
सम्यङ् मार्जय, पश्य तत् प्रियहितं देहं प्रसन्नं
स्फुरत्

५४

मृत्पट्टिकार्द्रवसनार्पणकाल एव
प्राणक्रिया सहजदीर्घतरा सुसाम्या ।
चेतः स्थिरं भवति मङ्गलधाम्नि तस्मिन्
सौख्यं तदा किमपि मन्त्रजपादपूर्वम् ॥

५५

कुक्ष्यशुद्धिर्यदाऽनल्पा जलं पीत्वा विशेषतः ।
वमनं कुरु धैर्येण नागवल्लीं स्पृशन् गले ॥

५६

उपवासे तु वस्त्या हि सूक्ष्मं मलविसर्जनम् ।
योगिनः स्वयमेवैतत् कार्यं कुर्वन्ति शक्तितः ॥

५७

अस्मादृशामशक्तानां 'एनिमा" नालिका वरम् ।
यदन्तःप्रापिता आपः मलं निस्सारयन्ति हि ॥

५८

मलकोशविशुद्धिश्च बृहदांत्रस्य वै तथा ।
अन्तः शुद्धिर्यदा स्यात्तु सूक्ष्मांत्रस्थं पुरःसरम्

५९

एवं तु मलशुध्या हि रोगबीजं नरो जयेत् ।
मलं हि मरणं प्रोक्तं तस्माज्जाग्रत जाग्रत ॥

६०

वस्तिक्रियाजलमहो नहि नीरमात्रं
"आपो हि भेषज" मिदं "सुमयो सुव" स्ताः
"आपः पुनन्तु पृथिवीं" इतिवेदमन्त्रात्
संस्कारमाप्नुवदिदं भगवच्छरीरम् ।

६१

"श्रद्धा यज्ञो वज्रमेवास्ति नीरं
रक्षोघ्नं च त्वेव देवप्रियं च ।
सर्वा देवाश्चैवमेवाऽऽमृतं तत्
शान्तं शान्तं सर्वशान्तं सदा यत्" ॥

६२

अन्तर्देशो बहिर्देशः यदा वाऽस्मिन् कलौ युगे ।
पत्तनेषु विशेषेण पल्लीष्वपि तथैव च ॥

६३

किं नाम न कृतं पापं बहिर्देशगतैश्च हा ।
मृद्गर्ते च मलं मुक्त्वा मृदोपरि तु छादयेत् ॥

६४

बहिर्गमनसंस्कारादारोग्यं वर्धते ननु ।
नगरं नरकायैव ग्रामराज्यं प्रवर्धताम् ॥

६५

मृद्व्या मृदा च सुचिरं यदि शीतलेन
द्वारे गुदस्य बहुशो जलसेचनेन ।
शौचं क्रियेत, सकलं मलिनं प्रशुद्धं
मृद्देविकाप्रदयया बहिरेति चोष्मा ॥

६६-६८

अङ्गाङ्गीने चाग्रभागे सदा तु
देहस्यौष्ण्यं धातुकामं यदस्ति ।
तत्तत्सर्वं सर्वदा पादहस्ते
चक्षुःश्रोत्रे नासिका गुह्यदेशे ।
याथायोग्यं मृज्जलैरेव शुद्ध्यात्,
तेन प्राप्यं शीतलं रक्तमेव ।
रक्तौष्ण्यं चेन्निर्गतं, साधु देहं
शक्तं भूयान् नूतनं कर्मदक्षम् ॥

६८

कामवेगोद्भवो रोगः लिङ्गस्नानेन शाम्यति ।
तथैव मृत्तिकाशौचं दीर्घकालं शमाऽऽवहम् ॥

६९

मूलव्याधिरहो नैव मृच्छौचे यदि ते स्पृहा ।
नवनीतसमां मृद्वीं युञ्जीतैवं मुदं सदा ॥

आतपस्नानम्

७०

अनातपे शिरः कृत्वा त्वातपे देहमर्पय ।
शङ्खवादि छादयित्वा सुखाऽऽसनपरो भव ॥

७१

पापे चतुरः सोऽहं भोगी
मोचनचतुरस्त्वमसि विरागी ।
भासुरभासा भास्कर नित्यं
रोगविदूरं मां कुरु सत्यम् ॥

७२

वर्धते जीर्णशक्तिर्वै वार्धकं दूर एव तु ।
तिष्ठत्येव सदा भीरु दूरगं मरणं ध्रुवम् ॥

७३

आतपस्नानमेतत्तु स्वेदनिःसृतिकारणम् ।
अजीर्णशुद्धिं त्वक्छुद्धिं देहोल्लाघं करोति वै ॥

७४

सवितुः कृपया नित्यं देहभारं निवारयेत् ।
मित्रस्य मैत्र्या सत्यं भो लभेताऽऽरोग्यसम्पदम् ॥

७५

ज्वरादिकं नैव भवेदतस्तु हा
यतो हि चौष्ण्यं बहिरागतं रवेः ।
अन्तर्यदा चौष्ण्यमये निरुध्यते
बलाद् बहिर्धावति चोष्णरोगतः ॥

७६

नैव कर्तव्यमेमत्तु रोगान्ते श्रान्तजीवने ।
मानसी स्फूर्तिरेवाऽस्ति प्रमाणं सूर्यमज्जने ॥

७७

सूर्यस्नानात् परं चैव स्नायाच्छीतेन वारिणा ।
औष्ण्योत्तरं शीतजलं पावनं परमं स्मृतम् ॥

७८

अर्द्रं वस्त्रं कदलीपत्रं
वाऽन्तर् निहितं तदुपरि चोर्णम् ।
वसनं वार्यं दधतो धार्यं
त्वेकमुहूर्तं शयनं कार्यम् ॥

७९

ऊष्मोत्थाने क्वथितजलतः शङ्कुं छादयित्वा
शीर्षं मुक्त्वा, सुहितरुचिरं शीतकाले त्वजीर्णे
स्वेदोद्गामी दशसु निमिषेष्वेवदेहं विभारं
स्नायात् तस्मादथ च सलिलैः शीतलैः सम्यगेव॥

८०

मृत्पट्टिकामर्पयेत्तु नाभेर्नीचैरहो गुणाः ।
कति वा वर्णनीयास्ते पुनर्जन्म नवं यथा ॥

८१

उत्पादनं हि शाकस्य पत्रस्यापि फलस्य च ।
भूमौ कुद्दालखननं स्वेदकर्मविशोधनम् ॥

८२

करात्रघट्टनं व्रीहेः तंडुलादेश्च पेषणम् ।
द्रव्यशुद्धिं वपुःशुद्धिं तुष्टिं पुष्टिं ददाति च ॥

८३

श्वासोच्छ्वासक्रिया चैका, मलमूत्रविसर्जने ।
तत्रैव स्वेदनिःसारः, "चतुःसूत्रीं" सदा स्मरेत्

शीतोदकस्नानम्

८४

स्नानं सदा शीतलेन वारिणा भृगुपातिना ।
प्लवनेन तथा नद्यां वारिपुष्करणीषु यत् ॥

८५

स्वास्थ्यं ददाति देहस्य नूतनतां तद् बलं तथा ।
चित्तं करोति सुस्फूर्तं रसायनमिवोत्तमम् ॥

८५

गृहाऽऽगतैश्च लोकैस्तु तत्क्षणं नैव भुज्यताम् ।
कृत्वाऽऽरामं, शीतलेन स्नात्वा भुञ्जीत बुद्धिमान्

८७

बालभावश्च कथ्येत निष्फलं जलताडनम् ।
बालभावं परं मन्ये त्वौषधं जलमेलनम् ॥

८८

उष्णोदकाय स्पृहयेत् किमर्थं मम मानसम् ?
इति मान्तव्यमेवास्ति, तदजीर्णं मलं भवेत् ॥

८९

अजीर्णतादशायां तु स्नानं त्याज्यं, तदा खलु ।
नोष्णोदकेन स्नातव्यं, स्नाने रोगविवर्धनम् ॥

९०

कराभ्यां शीतलं किञ्चित् जलमादाय तेन च ।
क्लिन्नाभ्यां मर्दनं देहे स्नानादपि महत्फलम् ॥

९१

जलेन सेचनं तूर्णीं सर्वावस्थासु नो भवेत् ।
ज्ञात्वा ज्ञात्वा प्रकुर्वीत तदेवोत्तममज्जनम् ॥

९२

वर्षास्नानं त्वमृतस्नानं
धावनदूरं मधुरं रुचिरम् ।
औष्ण्यं विगतं, बलदं छलदं
नर्तनभोग्यं त्वहहा भाग्यम् ॥

शुद्धिरेव सिद्धिः

९३

तथा चैवं क्रमः साधुः, वृथा ह्यौषधसेवनम् ।
भोजनादौषधाच्चाऽपि शुद्धिकार्यं विहन्यते ॥

९४

शुद्धिकार्य–सहायार्थं पेयं पानीयमेव च ।
गुडमिश्रं निंबुमिश्रं गुडहीनं बहूत्तमम् ॥

९५
शुद्धीकरणसंदर्भे किञ्चिद् बाधेव दृश्यते ।
स्मयमानमुखेनैव सोढव्या शुद्धिमिच्छता ॥

९६
न भोज्यं नौषधं ग्राह्यं देहाशुद्धिमुमुक्षुणा ।
यावद्धि शुध्यते तावद् देहाशुद्धिर्विवर्धने ॥

९७
सर्वा बाधास्तनौ या याः क्षुत्पिपासादिवृत्तयः ।
निर्मलीकरणं त्वन्तः, आरब्धमिति जाग्रति ॥

९८
ज्ञातव्यं तु तदाऽस्माभिः "चोरा धावन्तु मद्गृहात्"
ता बाधाः प्रतिरूपेण शाम्यन्ते त्वौषधादिना ॥

९९
अन्तरेव हि तिष्ठन्ति पुनरुद्भूततां गताः
किञ्चित् कालं सुखमिव, पूर्णनिष्कासनं न वै ॥

१००
पूर्वेण विपरूपेण विषान्तर समागमः
विपद्वयी चौषधाच्च 'विषस्य विषमौषधम्' ।

१०१
क्लेशानां सहने शक्तिः देहगा मानवी च सा
वर्धनीया, न हि छेद्या पुरुषार्थाऽऽकरे नरे ॥

१०२
शुद्धिरेव हि सिद्धिः स्यान् नूतनं नास्ति साधनम्
अकृतं ब्रह्म साध्यं न, कृतं नैवाऽस्ति साधनम् ॥

सिद्धापायः

१०३
कृतबन्धविनाशार्थं सर्वशास्त्रसुदर्शनम् ।
मलप्रक्षालनं कार्यं, नान्यत् तन्न साधनम् ॥

१०४
प्रतिबन्धप्रणाशेन कार्यसिद्धिरितीर्यते ।
तस्मात् सर्वपरित्यागः साधनात् पूर्ववृत्तिकः ॥

१०५
सिद्धधर्मो ह्युपायः स्यात् साध्यधर्मो न साधनम्
फलं च साधनं चैव ब्रह्मैव न परं स्मृतम् ॥

१०६
फलोपायाऽप्रभिन्नत्वादद्वैतं सर्वसम्मतम् ।
प्राकृतं जीवनं चैतद् वेदान्तानुगतं स्मर ॥

१०७
स्वच्छावस्था शरीरे या स्वस्थता सैव कथ्यते ।
आरोग्यं नूतनं नास्ति ह्यौषधादि- कुसेवया ॥

१०८
अङ्गाङ्गिशक्तिवैकल्ये कारणं मलरोधनम् ।
मलशोधात् स्वयं शक्तिः जागृता भवति ध्रुवा ॥

१०९
शक्तिं रुणद्धि सिद्धां तामजीर्णाहारजं मलम् ।
मलवस्तुविनाशो यः स एवाऽरोगता मता ॥

११०
"सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः"

सन्ध्योपासनम्

१११
सन्ध्यामुपास्य गायत्रीं मातरं तां त्रिकालिकाम्
सावित्रीं च सरस्वत्याऽऽख्यामेवैवं त्रिमूर्तिकाम् ॥

११२
आरोग्यं मानसे देहे सहजं प्राप्नुयान् नरः ।
फलाऽभावविशिष्टैषा ऽकरणे प्रत्यवायिनी ॥

११३

त्रिसन्ध्याप्रार्थनैवैषा सर्वेषां बुद्धिशोधिनी ।
नित्यं भूयादियं शुभ्रा, सर्वकर्मसुयोग्यता ।

११४

पूर्वं त्वं शुचितां भजस्व भागवत्सौन्दर्यनिध्या नतः
तच्च स्यादहहा सुखं सुखतरं देहस्थ नॄणां सदा ।
स्नानेनैव शुचित्वमेवमिति वा माभूद् भ्रमो नः सदा
सर्वस्यापि शुचित्वदाननिरतो निर्व्याजबन्धुः प्रभुः ॥

११५

पूर्वं त्वाचमनं, समस्तकरणं मे नास्ति नास्त्येव मे
पारार्थ्यं ननु देहिदेहकरणेष्वेवं स्थितिः स्याद् यदि
भूमिर्द्यौः सकलं स्वमस्ति महतो मान्यस्य लोकप्रभोः
इत्येवं सुमतिः सदा प्रभवती जागर्ति सत्स्थैर्यदा ॥

११६

"अन्ये धर्मरता भवन्तु पुरत श्चेत्येव यो वै भ्रमः
तस्याऽस्यैव निरासनाय भवतात् स्वाग्रेसरत्वं शुभे
तस्मादेव समस्तकर्मकरणेष्वाचम्य चैवाऽऽरभे
यावानस्मि यथाऽस्मि तावदहहा सर्वं जगत् स्याच्छुभम् ॥

११७

मदीयपादयोः पूर्वं पादरक्षा विधीयते ।
कंटकादीनि न स्पर्शं ददते दुःखकारणम् ॥

११८-११९

कंटकोद्धार एवास्तु प्रथमं, तदनन्तरम्
चरामि भुवने सौख्यात्" इति वाक्यं कदापि च
विवेकी कोऽपि न ब्रूते, धर्मं पूर्वं स्वयं चरेत् ।
पौर्वापर्यक्रमस्येदं रहस्यं त्वं सदा स्मर ॥

१२०

"प्रायो वहिर्व्याप्तिरवज्ञया हरे !
हठाऽऽख्ययोगे नियुपेक्ष्यते तव ?
अन्तस्तवैवास्ति हि यत् प्रभावनं
बहिश्च किं नास्ति ? न लोक्यतां यतः"

१२१

अस्यैव काकोः किल सम्यगुत्तरं
ददाति चोग्रभूर्भुवरादिमन्त्रकः ।
दृश्यं जनानां बहिरेतदत्र यत्
यदस्ति सर्वं तव मूर्तिरेव तत् ॥

१२२

निमीलनं ध्यानसुलक्ष्म चेति यत्
स्त्रीणां सुरक्षेव पटस्यच्छादनात् !
राजाऽऽख्ययोगे तु निमीलनं न च
निरोधवृत्तेरपि संप्रवृत्तिता ॥

१२३

मन्त्रपूतं वारिपानं किञ्चित् किञ्चिद् यदा भवेत
नालिका शुद्धिमायाति ततो ह्यन्नं सुपच्यते ॥

१२४

प्राणापानसमायुक्तिः पाचने कारणं स्मृतम् ।
श्वासोच्छवासे सुसाम्यं तद् दैर्घ्यं च सहजं भवेत्

१२५

प्राणशक्तिविवृद्ध्यर्थं प्राणायामस्य साधनम् ।
सुखदुःखहरं दृष्टं नाडीशुद्धिकरं भवेत् ॥

१२६

प्राणायामस्य करणात् मलनिर्मोचनं सुखात् ।
कामोद्वेगभयादीनि दूरं यान्ति, न संशयः ॥

१२७

सन्ध्याकालेषु चोपास्तिः निर्मिता स्वास्थ्यवृद्धये
तस्मादहरहर्वत्स! तामुपास्व हितप्रियाम् ॥

१२८

बन्धनमुक्त्योर्मध्येऽस्माकं
सन्ध्येवास्ति हि मोक्षस्येच्छा ।
तस्मात् सन्ध्याकाले सुभगे
त्वस्मन्मुक्तिः सरला सुलभा ॥

१२९

बन्धनकारणमिदमस्ति
"यदिदं त्वङ्गं मम चैवास्ति" ।
'सर्वं चेश्वरकैङ्कर्यार्थं"
त्वित्याऽऽचमनं वक्ति हितार्थम् ॥

१३०

बहिरिदमस्ति तु यत् तत् सर्वं
भूर्भुवरादि च सर्वं सर्वम् ।
ईशावास्यं येनैवेदं
सप्त च भुवनं तस्यैव स्वम् ॥

१३१

पिण्डशुद्धिमण्डशुद्धिमेवमेव मानवाः
कुरुत कुरुत नित्यमेव क्व च न सन्ति दानवाः ॥

१३२

एवं मनः स्थिरं चेत्तु पापनाशनमेव च ।
जलपानेन सिद्ध्येत ध्येयप्राप्तौ त्वराऽपि च ॥

१३३

सुखस्य सिद्धिर्जलपानसिद्धा
जीवप्रशुद्धिर्जलपानसिद्धा ।
अभोज्यशुद्धिर्जलपानसिद्धा
सर्वप्रशुद्धिर्जलपानसिद्धा ॥

१३४

त्रिकालपापं प्रविनश्यतीह
त्रिसन्धिकाले चर वन्दनं तत् ।
तदा तदा भारनिवृत्तिरस्तु
नित्यं यथा स्नानमिवाऽविरस्तु ॥

१३५

गायत्री वक्ति मार्गं त्वतिसितसुभगं क्षेमदं चेश्वरस्य
भर्गो देवस्य तस्य प्रसवितुरहहा मध्यदेशे स्थितस्य ।
एवं चाऽपि प्रमेयं सकलकुलहितं तारतम्यं विनैव
सर्वैर्मुक्तिः प्रलभ्येति सुरनरधियां चोदनं नोदयन्ती ॥

१३६

स्वामित्वं सर्वनिष्ठं,
न तु मयि भवतादेवमेव प्रपत्तिः
नाहं नाहं न चाहं,
न च मयि फलतोऽप्येवमेवास्तु किञ्चित् ।
"यूयं सर्वे पिबध्वं
त्वमृत"मिति यथा मातृमन्त्रो य एषः
तं तं मन्त्रं नमामः
सकलहितकरं गायतां श्रीत्रिवेणीम् ॥

१३७

समूहदास्यं गणसंस्तुतिश्च
समूहमुक्तिर्नरजन्मसारः ।
गायत्रिमन्त्रो वदतीदमेव
नरस्य रस्यं सुमहद् रहस्यम् ॥

१३८

"ईश्वरप्रभुता चेश्वरशरणं
चेश्वरसेवा सकलैर्मान्या" ।
तत्त्वस्यास्य हि मथनं भूतं
सन्ध्या वन्दनमूलं कथितम् ॥

१३९

मित्रो देवः पाति लोकान् समस्तान्
मित्रो देवः प्रेरयत्येव सर्वान् ।
मित्रो धत्ते, सद्व्रते शिक्षतेऽस्मान्
मित्रस्यार्थे हव्यमेतद् घृताऽऽढ्यम् ॥

१४०

रथेन सवितााऽऽयाति मर्त्यामर्त्यं विलोकयन् ।
सर्वेषां चक्षुरेवाऽसौ सर्वात्मा सर्वतः सुखम् ॥

१४१

वरुणे प्रार्थनमेतच्चैव
"कृपया पाहि च मर्त्यानस्मान् ।
जीवद्रोहो मैव च नः स्यात्
करुणा प्रेम च सत्यं भूयात्" ॥

१४२

वास्तवी तु सुविश्रान्तिः सन्ध्योपासन एव ते ।
जपादनन्तरे काले स्वयमेवाऽनुभूयते ॥

१४३

स्नानकर्म च निर्वर्त्य मध्याह्ने सूर्यदर्शने ।
शतं वर्षाणि जीवेम नन्दामाप्यजिता मुदा ॥

१४४

उपास्य चैवं सावित्रीं सायं चेमां सरस्वतीम् ।
नक्षत्रदर्शनं यावद् दीर्घसन्ध्यश्चिरं भव ॥

उपवासः

१४५

सर्वेषां कर्मणां वत्स विरामः समपेक्ष्यते ।
विद्या-वाणिज्य-राज्यानां, कुक्षेर्न स्यात् कुतो ? वद

१४६

एकवारं दिने भोक्ता ह्युपवासी भवेद् ध्रुवम् ।
प्रातःकाले चोपहारः त्यज्यते येन वाऽपि च ॥

१४७

सुखोपवासं कुर्वाणः द्वे दिने त्रीणि वाऽपि च ।
आरोग्यं प्राप्नुयात् स्वल्पं आदावेतद्धि शोभनम्

१४८

पूर्णाऽऽरोग्यं भवेद् वत्स ! प्रायो मासोपवासतः ।
एकाकी न तु कुर्यात् तं विज्ञसान्निध्यमिष्यते ॥

१४९

त्रिषवणमुदकोपस्पर्श एवास्तु नित्यं
वपुषि तु सुखतैलेनाप्यथाभ्यञ्जनं च ।
नियत मृदि च योगो, बस्तिना बाह्य सर्जा
मलिनमलिनभूतस्याप्ययो देहगस्य ॥

१५०

सङ्कल्पशक्तिं प्रधरेत सत्यां
सत्ये मनश्चापि मुदा निवेश्य ।
सत्सङ्गतौ धैर्यमये भजस्व
खाद्यादिचिन्ताविमुखो रमस्व ॥

१५१

शाकपत्रफलाहारं त्वेकवारं कुरु व्रते ।
चतुर्थकाल एवाऽशी मिताऽशी च वशी भव ॥

१५२

मासोपवासफलमस्ति तदाऽऽद्यवारे
कुक्षेस्तथाऽऽन्त्रमलिनं बहिरागमाय ।
सिद्धं भवत्यथ च कष्टमहो द्वितीये
यत् प्राय एव मलिनं बहिरागतं हा ॥

१५३

वारे द्वितीय अधुना मनसो विषादः
"स्यादेव भङ्ग उपवासमहाव्रतस्य ।"
इत्येव मानसविचञ्चलताऽभिवृद्धा
देवस्य दिव्यकृपया यदि लङ्घनं, शम् ॥

१५४

वारे तृतीय अधुना बहुसौख्यमेव
रक्तस्य शुद्धिरियती तनुता तनोश्च ।
नासा च चक्षुरथ कर्णतलं च जिह्वा
चर्माऽपि मानसमहो करणं प्रशुद्धम् ॥

१५५

वारे चतुर्थ अधिदैवबलं च किञ्चित्
स्फूर्तं भवत्यथ तु धर्मरुचिश्च वृद्धा ।
देहस्य चाऽपि बलमेधत एव सत्यं
सर्वं जगत् प्रमुमयं सततं प्रदृश्यम् ॥

१५६

उपोष्यकालादपि चोर्ध्वमेव
सुसंयतं जीवनमेव च स्यात्
मासद्वयं यावदथाऽपि नित्यं
जाग्रद्भिरेवैवमहो नु भाव्यम् ॥

१५७

भूयादिवैव सततं त्वशना पिपासा
तत्काल एव शरणं भगवन्तमेव ।
ध्यायेत, तीर्थमपि वा पदगं पिबेत
स्वाऽऽचार्यपादचरणौ शरणं प्रपद्ये ॥

१५८

सत्वेच्छया ननु भवेदयमेकमास-
सौख्योपवास, अथ नैव रजोगुणेन ।
तत्तादृशेन कथितेन निरन्नपाने-
नाऽन्यत् कदाऽपि भवतीह महाऽऽपदः किम् ? ॥

१५९

क्षुधं विनैवापि च भोजनं यत्
तत्राऽपि यद्भोजनमप्यतीव ।
अयुक्तकालेऽपि यदल्पखाद्यं
तेषां त्रयाणां क इहास्ति लाभः ? ॥

१६०

आरोग्यनाशः प्रथमो हि दृष्टः
द्रव्यस्य वैयर्थ्यमहो द्वितीयम् ।
सृष्टौ जगच्चक्रविकुंठनं हा
विभोजनं लोककुभोजनं च ॥

१६१

कारुण्यपूर्णस्य जगत् प्रभोर्यत्
उल्लङ्घ्य सर्वाऽशनशासनं तत् ।
कारुण्यपूर्तिः क्रियते मया किं ?
ततोऽनुवर्ते करुणाऽऽकरं तम् ॥

१६२

अत्याहारादायुर् व्यर्थं पथ्याहारादायुः सार्थम् ।
ब्राह्ममुहूर्तेऽध्ययनं ध्यानं, नष्टं,—भूतं, दृष्टं चैवम्

१६३

अल्पाऽऽहारो दीर्घमायुर्ददाति
ग्रासेयत्ता कल्पिता ब्रह्मणैव ।
अत्याऽऽहारादल्पकाले प्रपूर्णात्
अल्पग्रासो दीर्घकालायुषे स्यात् ॥

१६४

अल्पाहाराद् भवति विरतिर्जाठराणां क्रियाणां
अल्पाहाराद् भवति पचनं पूर्णरूपं सुखेन ।
अल्पाहाराद् भवति शकना देहगा स्फूर्तिसिद्धा-
प्यल्पाहाराद्भवति पिहिता नाडिकोद्घाटिताऽध्वा
सुखं जीव

१६५

स्वाध्यायः स हि कर्तव्यः नित्यानुभववृद्धये ।
यदधीतं प्रवाच्यं तद् बालमित्रजनेषु च ॥

१६६

सूत्रयज्ञस्तु कर्तव्यः ह्यम्बरं ध्रियते च यैः ।
तकलीचक्रिकाभ्यां वा सूत्रमुत्पादयेन्नरः ॥

१६७

"जगत्यहो कर्मकाराः कीदृशीं स्थितिमास्थिताः"
एवमेकीभव त्वं तैः स्वस्थाऽऽचारविवृद्धये ॥

१६८

मौनेन नित्यं घंटार्धं वाऽपि वत्स ! निरन्तरम् ।
सूत्रं कुरु तमु ध्यायन् "सुतन्तुं तन्तुवर्धनम्" ।

१६९

अहमेव परं दुःखी जनश्चापि सुखीति च ।
माभूत् कल्पनमेतत्तु दुःखबीजं सदा त्यज ॥

१७०

मत्तः परतरो नास्ति सुखभोगे निरन्तरे ।
लोकात् परतरो नाऽस्ति दुःखभोगे निरन्तरे ॥

१७१

एवं चेच्चिन्तनं वत्स ! सर्वेषां सुखमेव च ।
लोकसङ्ग्रहकारुण्यं तुष्टिः पुष्टिः प्रवर्धते ॥

१७२

इति मत्वा सुखं जीव वत्स ! त्वं शरदां शतम् ।
सेवावकाशो लभ्येत गुणवृद्धिश्च भाविनी ॥

१७३

अल्पे न सुखं महति सुखम्
कर्मविदूरं सत्यं सुसुखम् ।
त्यज सुखमल्पं भज तदनन्तम्
चिन्तय साधु त्यजसि दुरन्तम् ॥

१७४

सायंकाले वनान्तेषु पर्यटन् साधुभिः सह ।
नदीतीरेषु शैलेषु प्रार्थनां साधयेन्नरः ॥

१७५

एवं पापानि मुच्यन्ते तत्तद्दिनकृतानि वै ।
अयुक्ताऽऽहारसञ्चारौ पापमूलं सदा स्मर ॥

१७६

युक्ताऽऽहारविहाराभ्यां पापं जित्वाऽनुभूयताम् ।
सुखमात्यंतिकं प्रायो नित्ये तत्राऽपि तद् भवेत् ॥

१७७

अजीर्णदोषाद्धि भवेदपथ्यं
सर्वं सदा सर्वजनेषु वत्स !
सुजीर्णतायां यदि दृष्टिपातः
नैवाऽस्ति दुष्टान्नरुचिः कदाऽपि ॥

१७८

मानसं दैहिकं वाऽपि सुखं नैव भवत्यये ।
सुखमेवाऽसि मूले त्वं, स्वात्मसौख्यं सदा स्मर ॥

रोगः कृपा

१७९

रोगः कृपा देववर त्वदीया
ह्यन्तर्निबद्धं मलमेव बाह्यम् ।
अहं तु कामाद्, विदिताऽनभिज्ञः
नैतावताऽह्नाप्युपवास-कर्ता ॥

श्रीभगवान् उवाच

१८०

त्वदीय यत्न-व्यतिरेकतोऽपि
सोऽहं त्वदीयप्रसुखार्थमेव ।
एवं च रक्षामि समस्तजीवान्
दत्वा तु रोगादि-समस्तदुःखम् ॥

१८१

रोगं हि मत्वा हसता सुखेन
त्वमेव भूयाः सुख-योगयुक्तः ।
नैजे सुखे देहसुखे च भेदः
कृत्तस्त्विदानीं निरवद्यरीत्या ॥

१८२

मनः-सुखं देहसुखं न तावत्
सुखं तदेवाऽस्ति तु शुद्धमेव ॥
किमौषधैः क्लिश्यसि मूढबुद्धे
निरामये प्राकृत-जीवने स्याः ॥

१८३

सुखस्य शुद्ध्यर्थमये शृणु त्वं
दुदामि दुःखं तदशुद्धिमूलम् ।
इत्येव चिन्ता भवता हि कार्या
ततो नु रोगाद्यवकाश-दानम् ॥

१८४

त्वत् कार्यमेवाहमहो करोमि
तदा तदा संयमदूरगस्त्वम् ।
पश्याऽद्य मासं निरवद्य-पानः
भूयाःह्यरोगी निरवद्य-देहः ॥

१८५

रोगकाले यदेवाऽस्ति
रुचिरं सर्वदा तत् ।
त्वया सेव्यं, तदा रोगः
नास्त्येव खलु जीवने ॥

हिताशनम् मिताशनम्

१८६

हिताऽशनं मिताऽशनं भवति कुक्षि-शोधनम्
हिताऽशनं मिताऽशनं भवति चाऽऽन्त्रशोधनम् ।
हिताऽशनं मिताशनं भवति रक्तशोधनम्
हिताशनं मिताशनं भवति देहशोधनम् ॥

१८७

हिताशनं मिताशनं भवति करणशोधनम्
हिताशनं मिताशनं भवति चित्तशोधनम् ।
हिताशनं मिताशनं भवति श्रोत्रशोधनम्
हिताशनं मिताशनं संश्रुति-प्रशोधनम् ॥

१८८

हिताशनं मिताशनं भवति तालुशोधनम्
हिताशनं मिताशनं रामकीर्तनाऽदनम् ।
हिताशनं मिताशनं भवति घ्राणशोधनम्
हिताशनं मिताशनं दिव्यगन्धनाऽदनम् ॥

१८९

हिताशनं मिताशनं भवति त्वक्-सुशोधनम्
हिताशनं मिताशनं वायु-सेवनेरणम् ।
हिताशनं मिताशनं भवति नयन-शोधनम्
हिताशनं मिताशन शुद्धरूप-दर्शनम् ॥

१९०

हिताशनं मिताशनं भवति वाक्-सुशोधनम्
हिताशनं मिताशनं सत्य-मधुर-भाषणम् ।
हिताशनं मिताशनं भवति पाणि-शोधनम्
हिताशनं मिताशनं पात्रदान-वर्धनम् ॥

१९१

हिताशनं मिताशनं भवति पादशोधनम्
हिताशनं मिताशनं दूरवेगचारणम् ।
हिताशनं मिताशनं भवति पायु-शोधनम्
हिताशनं मिताशनं सुखं मलस्य मोचनम् ॥

१९२

हिताशनं मिताशनं गुह्यकरण-शोधनम्
हिताशनं मिताशनं परमवीर्य-रक्षणम् ।
हिताशनं मिताशनं सर्वयोगसाधनम्
हिताशनं मिताशनं सहजनित्यजीवनम् ॥

१९३

हिताशनं मिताशनं भवति धर्मचिन्तनम्
हिताशनं मिताशनं भवति धर्मबोधनम् ।
हिताशनं मिताशनं भवति धर्मचारणम्
हिताशनं मिताशनं सूक्ष्मधर्मदर्शनम् ॥

१९४

हिताशनं मिताशनं भवति तपःसाधनम्
हिताशनं मिताशनं सर्वतः सुपावनम् ।
हिताशनं मिताशनं सकलदुःखमोचनम्
हिताशनं मिताशनं सुखं सुखं सुखं सुखम् ॥

१९५

हिताशनं मिताशनं स्वच्छदेह–मन्दिरम्
हिताशनं मिताशनं सत्यदेव–मन्दिरम् ।
हिताशनं मिताशनं प्रेमकान्ति–सुन्दरम्
हिताशनं मिताशनं दयाशान्ति–मन्दिरम् ॥

१९६

हिताशनं मिताशनं सद्विचारचोदनम्
हिताशनं मिताशनं सदाऽऽचारवर्धनम् ।
हिताशनं मिताशन लोककान्तिदर्शनम्
हिताशनं मिताशनं सर्वगर्वमर्दनम् ॥

१९७

हिताशनं मिताशनं सर्वदानसंग्रहम्
हिताशनं मिताशनं न्याय्यमार्गसंग्रहम् ।
हिताशनं मिताशनं सर्वसत्–सुसंग्रहम्
हिताशनं मिताशनं सर्वलोकसंग्रहम् ॥

१९८

हिताशनं मिताशनं सर्वशास्त्रसारः
हिताशनं मिताशनं सर्वधर्मसारः ।
हिताशनं मिताशनं सर्वनीतिसारः
हिताशनं मिताशनं सर्वमुक्तिसारः ॥

१९९

हिताशनं मिताशनं भवति सर्वसंमतम्
हिताशनं मिताशनं लोकराज्यसंमतम् ।
हिताशनं मिताशनं साम्ययोगसम्मतम्
हिताशनं मिताशनं भवति मानवं मतम् ॥

२००

हिताशनं मिताशनं सरस्वतीनिवासः
हिताशनं मिताशनं सर्वधीनिवासः ।
हिताशनं मिताशनं प्रातिभप्रवासः
हिताशनं मिताशनं सर्वश्रीनिवासः ॥

२०१

कालयोर्भोजनं नाऽन्तराचाऽशनं
सम्यगेवाऽस्ति हि स्वास्थ्य एतद्व्रतम् ।
यौवनं पालयत्वभयमेवाऽखिलं
बाल्यके वार्धके त्र्येकवारं क्रमात् ॥

२०२

वासस्थानम्

वासस्थानं मृदा कार्यं
मृदि चैव सुचारणम् ।
आसनं भूतले नित्यं
सुखं शान्तिं प्रदास्यति ॥

२०३

पञ्चभूतात्मकं देहं पञ्चभूते विशेषतः ।
समर्पयति योऽयं वै दीर्घमायुरवाप्नुयात् ॥

२०४

बाह्यप्रकृतिसंस्पर्शे वर्तेतैव सुबुद्धिमान् ।
विज्ञानस्य फलं चेदं न त्याज्यं लभ्यमेव हि ॥

२०५

पञ्च भूतवञ्चनं सञ्चिनोमि वञ्चको
मातुरङ्कदूरगः शिशुरिवाऽहमद्य भो ।
सौधमेव कारयाम्यहह चूर्णसैकतैः
पार्थिवं निजं गृहं सहजदेहपोषणम् ॥

२०६

ऊर्ध्वभागछादनं पर्णपृथ्विकात्मकं;
पार्थिवाच्छरीरतो यो हि वायुरूर्ध्वगः ।
तं तु सुखत एतत् संस्करोति हितकरं
निर्विचार बहुधनं सौधकरणमेव हा ! ॥

२०७

श्वासकार्यविघटनं धूमगमनरोधनम्
रोगशतककारणं प्रकृतिदूरचारणम् ।
उष्णवायुवर्धनं सहजशान्तिमर्दनम्
किमिति मन्यसे वर बुद्धिमान् भवान् नर !॥

२०८

शीतलं जलं कदाप्यहह संस्पृशे न च
सूर्यचन्द्रतारके नभसि मे रतिर्न च ।
स्यूतवस्त्रबन्धनात् वपुषि मरुन्नैव च
विज्ञकाल एष हा ! मानसं तथा न च ॥

शयनम्

२०९

वर्षाभिन्नेषु कालेषु शयनं चन्द्रतारके ।
नीलाऽऽकाशे भवेद् वत्स ! रुचिरं शोभनं हितम् ।

२१०

भूमौ मृदि तथा दूर्वातल एव सुशेरते ।
यदि लोकाः, कथं भूयाद्, रोगादिकमहोबलम् ॥

२११

"भूशयो भूषणो भूतिः विशोकः शोकनाशनः"
इति मन्त्रान् स्मरन्नेव प्राप्नुयात् स्वापमुत्तमम् ॥

२१२

चन्द्राच्च तारिकाभ्यश्च ह्यमृतं वर्षति ध्रुवम् ।
आप्यायनं च देवानां मनसश्च विशेषतः ॥

२१३

औष्ण्यं शैत्यं न सूर्येण नापि चन्द्रादिना भवेत् ।
आहारदोषस्तत्राऽस्ति, कारणं मृग्यतां स्फुटम् ॥

२१४

देहप्रकृतिगो दोषः, न दोषो बाह्यमंडले ।
"जलदोषः सूर्यदोषः वायुदोष" इतीर्यते ॥

२१५

लोकेचाऽज्ञातसुभ्रान्त्या रूढ्याऽऽविष्टैः प्रवद्यते ।
अस्मन्मित्रेषु तेष्वेव विपरीतं नरैरिह ॥

२१६

अन्नस्थं दोषमेवैते दर्शयन्ति यतो हि नः ।
जलसूर्यादयः सत्यं वन्दनीया विशेषतः ॥

२१७

दोषाऽऽरोपो भवेद् योऽयं चोरदर्शनसाह्यदम् ।
"त्वमेव चोर" इत्येवं कृतघ्नानां यथा वचः ।

२१८

अस्मद्दोषस्तु शिक्षार्हः, नैव निन्द्यादृतून् शुभान्
दैवसृष्टिरियं पूज्यभावनातः प्रशील्यताम् ॥

२१९

रात्रौ जागरणं न स्याच्छीघ्रं नेत्रे निमीलयेत् ।
दीपप्रदीपशब्दास्तु वैरिणोऽरोगताकृते ॥

२२०

तस्मात् तानि तु वर्ज्यानि चैकान्ते त्वन्धतामसे ।
स्थिते शक्तिविवृद्धिः स्यादक्ष्णोः सङ्कल्पकस्य च ॥

२२१

निद्रापूर्वं स्वच्छ नीलावकाशे
तारा: पश्यन् वायुसेवां कुरुष्व ।
आमूर्धं वा देहमापादमूलं
पाणिभ्यां त्वं सम्यगामर्दयस्व ॥

२२२

गाढाऽद्य निद्रा सुसुखायते च
यदा हि देवे रतिमान् स्वजीवः ।
विश्रामधाम्न्येव सुविश्रमः स्यात्
नास्त्यत्र स्वप्नादिकुवृत्तिभेदः ॥

२२३

य एषु सुप्तेषु विभुः प्रबुद्धः
रामायणे युद्धतलेऽभिरामः ।
रामः कथं रक्षितवान् स्वयूथं
स्वापो हि सत्ये प्रलयोऽल्पकालः ॥

२२४

"अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ।"

२२५

श्वासोच्छ्वासौ यदा दीर्घौ सहजौ सौख्यलीलया।
तनुश्च लघुतां याति तदैव शयनोत्थितिः ॥

२२६

तत्पूर्वं नोत्थितिः साध्वी हठयोगेन किं भवेत् ?
चिरकालं शयानेषु दोषं पश्यन्ति हा जनाः ॥

२२७

चिरजागरणे रात्रौ तथैवाऽनल्पभोजने ।
तादृशैरेव लोकैर्हा किमर्थं नैव दृष्यते ? ॥

२२८

सङ्कोचो माऽस्तु निद्रायां
यदा स्फूर्तिर्न दृश्यते ।
तदा तदैव निद्रातः
यथैव श्वा स्फुरन् भव ॥

सुप्रभातम्

२२९

सुप्तोत्थितेन स्मर्तव्यं नित्यमेवाऽत्मनो हितम् ।
'ऊर्ध्वगः सत्पथाऽऽचारः' 'प्रियकृत् प्रीतिवर्धनः' ।

२३०

अहं तथैव भूयासं, भूयात् सुदिनमद्य तु ।
सर्वसेवैकरतिमान् स्यां सदा श्लक्ष्ण वाक्यवान् ॥

२३१

सर्वाङ्गमर्दनं चारु कर्त्तव्यं रक्तचालने
सुदूरं गच्छ दूर्वायां धावस्व यदि शक्यते ॥

२३२

देवः सुप्तो नैव रात्रौ तथापि
प्रेमैवैवं नाऽभिजानाति तत्त्वम् ।
देवः सुप्तो देव एव प्रबुद्ध्यात
एषा भक्तिः प्रेमकार्या विचित्रा ! ॥

२३३

सुप्तोत्थितैश्च जाग्रद्भिः सृष्टिकाल इवैव तैः
सुप्रभातस्य गीतानि पठ्यानि सहजं नरैः ॥

२३४

सात्विकः स तु कालोऽयं, सत्वोन्मेषणचातुरी ।
रक्षणीया मनुष्यैर्हा ! राजसी तामसी न च ॥

२३५

कस्मादागत एवाऽहं किं कुर्यां ! कुत्र गम्यताम् ।
मरणोत्तर कालीनं दिव्यं जीवनमाऽऽस्मरेत् ॥

२३६

गतिचिन्तनमित्येतत् गीताऽऽचार्येण कथ्यते ।
यत् तत् सर्वनराणां च प्रातरद्य सुशोभते ॥

शवासनम्

२३७

शवाऽऽसनस्थो हि शिवो भवामि
न किञ्चिदेवाऽप्यशुचि स्मरामि ।
सर्वेऽपि दोषाश्च पलायिताः क्व ?
देहात्मभारः सुतरामदृश्यः ॥

२३८

दिन दिने स्यात् मरणानुभूतिः
तेनैव देवस्य महानुभूतिः
यदि ह्यहं देहसहानुभूतिः
ममैव नष्टा विपुला विभूतिः ॥

२३९

भूमार्थमेवाऽस्ति कलेवरं त्विदं
भूमार्थमेवाऽस्ति समस्तमिन्द्रियम्
तेषां च येयं प्रविशुद्धिरास्थिता
संमार्जनी सा प्रभुमन्दिरस्थिता ॥

२४०

मृतिस्मृतिः स्यात् सुसुखं निरन्तरं
हसन् निरीक्षेत यथाऽतिथिं यमम् ।
पलायमानो मृतिभीतिभीतिमान्
नैवाहं एवायमरे नु जीवितुम् ॥

२४१
सदाऽस्तु मे ते कृतकृत्यभावः
नैवेह शिष्यात् क्रियमाणभावः ।
यदा स्मृतिर्वै मरणस्य नित्यं
कार्यं सुपूर्येत न चाऽत्रशिष्यम् ॥
२४२
धर्मेषु मान्द्यं जगतीह दृश्यं
कुतस्त्वरा पापविवर्धने च ? ।
"अहं बहुं कालमरेऽनुजीवा—"
म्यहो त्वियं मोहविजालहेला ॥
२४३
धीमान् महान् यद्यपि सच्चरित्रः
विचारविस्तारमहो न सोढा !
प्रायो नरः संकुचितः क्रियायां
अतो नु लोके प्रगतं च पापम् ॥
२४४
अद्याऽस्ति को वा प्रतिभूर्नरस्या
प्यन्त्यप्रयाणे क इहाऽस्ति कालः ?
दिने दिने श्रूयत एव वत्स
ह्यचिन्तिता मानवमृत्युवार्ता ! ॥
२४५
नाहं दरिद्रो न च मूर्ख एवं
कदाऽपि नैवाऽस्मि च देहरूपः ।
तथाऽपि देहं परिशुद्धमेवं
स्थातुं यते तद् बलमाऽऽवलम्ब्य ॥
२४६
सदा तु स्वानुभूतिः स्यात्
न किञ्चिदपि चिन्तयेत् ।
स्वास्थ्यमूलं तदेवाऽस्ति
सात्विक प्राप्यमेव तत् ॥
२४७
"आरोग्यमिन्द्रियौल्बण्यं"
कुद्रव्याद् भेषजाद् यदि ।
सहजाऽऽचार एवैषः
सत्वाऽऽरोग्यस्य कारणम् ॥
२४८
सात्विकं स्वास्थ्यमायातं
चेत्तदा लघुता सदा ।
करणत्रय सारूप्यं
संयमः सहजायते ॥
२४९
तदा हि देवोऽनुविराजते पुमान्
प्रफुल्लनेत्रोऽप्यमितप्रमोदवान् ।
स्वधर्मतोषोऽपि सुखाद् भवेत्तदा
स्वाऽऽचारशक्तिः प्रविवर्धते दृढा ॥
क्रान्तिः
२५०
येषां सुषुम्ना प्रविघाटनोन्मुखी
तेषां हि रोचेत विनूतनं मनः ।
येषां त्विडा पिङ्गलिका च केवलं
न ते हि जीर्यन्ति विचारसौभगम् ॥
२५१
तदर्थमेवाऽस्तु वपुर्विनूतनम्
तदर्थमेवाऽन्नमपि प्रणूतनम् ।
तदेव नूत्नं भवतीह जीवनम्
वृथा तु सर्वं यदि नाऽन्नपावनम् ॥
२५२
क्रान्तिस्तु सा या भवतीह, देहे
पवित्रतायाश्च कृते प्रगेहे ।
कथं प्रवेशं लभते कुदेहे
रसोऽमलो हा ? पतितोऽसि मोहे ॥

२५३

"व्यक्तेर्हि शुद्ध्यैव समाजशुद्धिः"
इत्यस्य तत्त्वस्य यदैव सिद्धिः ।
समाजसेवानिरतस्य पुंसः
भवेत् समाजोऽपि तदैव हंसः ॥

२५४

क्रान्तेश्च कार्यं परिवर्तनेन
हृदाऽऽख्यदेशस्य पवित्रितस्य ।
विबाधनं यन् मृदुनाडिकासु
विषमवाहोऽस्ति न तावतेदम् ॥

२५५

तदर्थमेवाऽस्तु निसर्गवृत्तिः
सदा समेषां वपुरन्नपाने ।
अन्नस्य शुद्धौ मनसो विशुद्धिः
मनोविशुद्धौ तु तदैव क्रान्तिः ॥

२५६

यावत् कामस्तथा क्रोधः लोभश्च नरसंकुले ।
धर्माऽविरुद्धो न स्याच्च तावत् क्रान्तिर्मरीचिका ॥

२५७

कामः परैः कारयति क्रोधस्तु कुरुते स्वयम् ।
लोभोऽनुमोदते दोषं त्रयं हि समदूषणम् ॥

२५८

भावपाको बहोः कालात् सिद्ध एव सतां हृदि ।
भाषापाकः सुसौम्यः स्यात्
सौम्यात् सौम्यतरस्तमः ॥

२५९

हिंसायां तु भवेत् क्रौर्यं क्रौर्यात् क्रौर्यतरं तमम् ।
विपरीतं त्वहिंसायां समाजक्रान्तिकारणम् ॥

२६०

समाजक्रान्तिस्तु मनःप्रशान्त्या
मनःप्रशान्तिस्तु वपुःप्रशान्त्या
वपुःप्रशान्तिस्तु सदन्नशान्त्या
सदन्नशान्तिः प्रकृति-प्रशान्त्या ॥

२६१

प्राकृतं जीवनं हित्वा नास्त्येव गतिरन्यथा ।
विकृतं जीवनं जह्यात् ततः क्रान्तिसमुद्भवः ॥

२६२

निसर्गजीवनं रम्यं निरवद्यं मुमुक्षुभिः ।
सदा मुदा वरेणीयं धियो यन्नः प्रचोदयात् ॥

२६३

स्थितिं देहि धृतिं देहि
देहि देहि विदेहताम् ।
मतिं देहि गतिं देहि
देहि देहि विधेयताम् ॥

२६४

आचारयमुना चेयं गाह्यतां गाह्यतां जनैः ।
योगेश्वरस्य कृष्णस्य कृपागोपीविगाहिता ॥

इति तिरुनारायणपुरम् अरैयर्दासस्य कृतिषु स्वानुभूतित्रिवेणी नामक जीवनोज्जीवनकाव्ये
आचारयमुना नामकः प्रथमः सर्गः

अथ स्वानुभूतित्रिवेणी नामक जीवनोज्जीवन काव्ये

## विचारगङ्गा नामकः द्वितीयः सर्गः

(तत्र पूर्वार्धम्)

मौनम्

१

आचारयोगादणुरेष आत्मा
यः काशते स्वच्छविचाररश्मिः ।
स्वस्यानुभूतिः प्रसृताऽत्र गङ्गा-
प्रवाहरूपेण विभोः पदाब्जात् ॥

२

इदानीं किल लोकेऽस्मिन् जना द्वंद्वैकभूषणाः ।
अर्थमूलाह्यनर्थाश्च शान्तिमूला ह्यशान्तयः ॥

३-४

विद्यामूला ह्यविद्याश्च वृद्धिमूला दरिद्रताः ।
भिषङ्मूलाः प्ररोगाश्च न्यायमूलाः प्रवञ्चनाः ॥
तन्त्रमूलान्यतन्त्राणि सेवामूलाः कुवृत्तयः ।
भूमिमूलं प्रदुर्भिक्षं सङ्घमूलं प्रदूषणम् ॥

५

यद्यपि शुद्धं चोद्देश्यं पन्था नानाप्रकंटकः ।
पथशुद्धिं विनैवार्थाः शान्तिविद्याप्रवृत्तयः ॥

६

भिषक् सेवा च भूमिश्च सङ्घश्चैव दिनेदिने ।
लोककंटकतां प्राप्ताः सृष्टौ दृष्टिरपेक्षिता ॥

७

समग्रदृष्टिरित्येव भावे भावे सुरक्ष्यताम् ।
भावघातो हि जीवानां स्वल्पानल्पविधानतः ॥

८

दृष्टिभेदं पुरस्कृत्य सृष्टौ वैशिष्ट्यमेव च ।
अविरुद्धं यदेवाऽस्ति तावन्मात्रं प्रगृह्यताम् ॥

९

विरुद्धसृष्टिः किल गर्वतः स्यात्
गर्वो हि मूलं सकलाऽऽत्महान्यै ।
शते शतं यद्धि सुसम्मतं स्यात्
तावच्च तावत् कृतिगं शुभं तत् ॥

१०

असम्मतिर्यत्र जनेषु दृष्टा
न तत्र सृष्टिः किल शोभनेष्टा ।
असम्मते दृष्टिविचारचर्चा
प्रेम्णा हृदैक्यं त्वथ मौनमर्चा ।

११

उपास्य संशीलनमेव मौनं
विद्याङ्गमेतत् कृतिशान्तिधीवत् ।
स्वस्यैव माहात्म्यनिगूहनं तन्
मुनेश्च वृत्तं सहजं हि मौनम् ॥

१२

चारित्र्य नीत्यादिषु वाक्प्रवृत्तिः
सर्वातिगे मौनमियं प्रशस्तिः
यत्रैव वाचो नहि शक्तिमत्यः
तत्रैव संस्थानमदो हि मौनम् ॥

१३

मौनेन वाग्बलं सत्यं मौनेन मितभाषणम् ।
मौनेन सर्वसन्तोषः मौनेनैव जगज्जयः ॥

१४

सर्वेषु चित्तेषु विशुद्धता स्यात्
रजश्च जाड्यं च सुसंयतं स्यात् ।

सत्त्वं प्रशुद्धं समुदारि च स्यात्
मर्त्ये च दिव्यं मुनिवृत्तितः स्यात् ॥

सद् भावना बलम्

१५

सद् भावना सदा सार्था, व्यर्था नैवच नैव च ।
असद् भावः सदा व्यर्थः, सार्थो नैव च नैव च ॥

१६

विद्यते, भिद्यते नैव सुसद्भावः कदाचन ।
भिद्यते, विद्यते नैव ह्यसद्भावः कदाचन ॥

१७

नेदं रम्यं वचनं मात्रं, गणितज्ञान प्रोतं सूत्रम् ।
सत्यं वीर्यं शक्तं पूतं, सर्वं लोकं कुरुते मित्रम् ॥

१८

सद्भावना भावित भावना सदा
सिद्धौषधं मर्दनवर्धितं यथा ॥
यया विमर्दे प्रियसत्यया दृशा
सैषा हि बुद्धिर्भवतीह भावना ॥

१९

वैज्ञानिको बुद्धिरितीर्यते या
विज्ञानमेवेयमथाऽपि सा स्यात् ।
सद्भावना सत्यमितीर्यते सा
सर्वप्रिया निष्ठुर दूरगा या ॥

२०

सद्भावना जीवति सर्वदैव
सद् भावना जीवयतीह सर्वान् ।
अनन्त एवाऽस्ति रसस्वरूपः
दुःखादतीतो विपुलो हि भावः ॥

२१

प्रजामूलं हि सद्भावः, तत एव प्रजामतम् ।
असद् भावा प्रजा काऽपि नास्ति नास्त्येव भूतले ॥

सर्वोदय घंटापथः

२२

अनर्थ-वीथीषु किमर्थमेवं
त्वितस्ततः पर्यटसीह वत्स !
सर्वोदयाऽऽख्यः किल चाऽऽविरासीत्
घंटापथः, सौम्य सुसेव्यतां भोः ॥

२३

"धनवादे" विषमत्वं "समवादे" व्यक्तिभयम् ।
"समयोगे" सर्वसहे प्रियसत्ये नास्त्युभयम् ॥

२४

"व्यक्ते र्विकासाय समत्वहानिः,
समत्वलाभाय नरत्वहानिः" ।
इमे उभे मानस-दूषणे तु
सर्वोदयेन स्त अहो न जातु ।

२५

वैषम्य-हानिः स्वयमेव दानात्
प्रकाशते व्यक्तिविशिष्टताऽपि ।
करस्य कार्यं तु यथाऽङ्गुलीभिः
तथैव सेवा सकलैः क्रियेत ॥

२६

सर्वोदयस्य बीजं तु सर्वथा मानवस्य हि
आत्मधर्मः स्वभावस्थः कृतप्रतिकृतं न हि ॥

२७

तस्माच्च सर्वकालेषु सर्वदेशेष्वपीष्यते ।
सर्वोदयस्य पन्थाश्च निर्मलः सत्फलस्तथा ॥

२८

*"द्वयार्थ निष्ठां" तां तां तां सर्वोदय सुनामतः ।
आह्वयन्ति महात्मानः फलोपाय विशुद्धितः ॥

* श्रीमन्नारायण चरणौ शरणं प्रपद्ये श्रीमते नारायणाय नमः ॥ अयं "द्वयमन्त्रः" कठवल्यामुक्तः । साधन शुद्धिः, साध्यशुद्धिः, उभयत्राऽपि निष्ठा द्वयार्थ-निष्ठा १) श्रौता, २) आचार्यरुचि परिगृहीता ३) महात्मागान्धि गृहीतेति ता मिति तच्छब्दत्रयम् ॥

२९

सर्वसम्मतिरित्येषा सर्वरोगवशंकरा ।
बहुसम्मतिमूला हि सर्वानर्थपरंपरा ॥

३०

अन्यूनसंख्यया सर्वे समाना मानवा यदि ।
स्व-स्व व्यक्तित्व-संस्फूर्तिः समाजस्य हितेऽर्प्यताम्

३१

शाश्वतं सख्यसौख्यं तत् सत्यमेव सुसिद्ध्यति ।
विषचक्रभ्रमश्चाऽपि स्थगितोऽपुनरङ्कुरः

३२

सत्याऽहिंसे मानदंडौ व्यवहारे नरे नरे ।
आर्थिकं नैतिकं चाऽपि वैषम्यं नाऽस्ति कर्मसु ॥

३३

अन्ने च वसने चैव गृहकार्येषु सर्वशः ।
सर्वमानव-संयोगः यथाशक्ति भवेद् ध्रुवम् ॥

३४

ऐहिके परमार्थे च नाऽस्ति सर्वोदये भिदा ।
"कुर्वन्नेवेह कर्माणि" यथैहैव, शुभं ततः ॥

३५

हिंसाऽनृत्ये सदा वर्ज्ये मद्यमांसाशने तथा ।
न चैवाऽस्ति तु निर्बन्धः, स्वेच्छा संयम एव च ॥

अर्थ शुद्धिः

३६

विद्यया न्वर्थलाभः स्यादिति यस्तु प्रवर्तते ।
विद्यैव स्यादर्थलाभ इति मत्वा प्रवर्तताम् ॥

३७

येन केनाऽपि मार्गेण श्रीमत्वं न हि युज्यते ।
अदत्वा विपदं लोके श्रीमत्वं शुचिशीलता ॥

३८

"शुचीनां श्रीमतां गेहे" इत्याऽऽह भगवान ननु
शुचित्वं श्रीश्च यत्राऽस्ति श्रीमान् वै सतु पूरुषः ॥

३९

मृज्जलैरुपवासैश्च देहशुद्धिरितीरिता ।
न्यायाऽऽर्जिते न वित्तेन सुखशुद्धिरितीर्यते ॥

४०

श्रीमन्तं भगवानाऽऽह श्रीमन्तं शुचिमार्गतः ।
तादृशां श्रीमतां गेहे "योगभ्रष्टोऽभिजायते" ॥

४१

दारिद्र्यंशुचिता चैव यत्राऽऽस्ते त्विच्छया स्वयम्
सएव ब्राह्मणो ज्ञेयः ' नैव श्रीः रमतेऽत्र यत् ॥

४२

श्रीमत्वं, शुचिता, येषु राजर्षिषु च विद्यते ।
तदर्थं सर्वदानैस्ते यज्ञयागादि तन्वते ॥

४३

"राष्ट्रं हि रमते तत्र" "न वै राष्ट्रं द्विजोत्तमे"।
इदानीं चिन्त्यते सर्वैः श्रीराज्योभय कांक्षया ॥

४४

धनं तु वैश्ये स्यादेव यदु वृद्धिं गतं भवेत् ।
धनस्य वृद्धि धर्मेण, तस्मात् श्रेष्ठी स उच्यते ॥

४५

अतः कलियुगे प्राप्ते "गोदाम्बा, शठजित्"मुख
अस्माकं कुलनाथा ये तेऽभवन् सर्वथा शिवाः ।

४६

'शूद्रःसाधुः कलिःसाधुः स्त्रियःसाधु' रितीरणा।
शूद्रवृत्या समाजस्य पोषकः शूद्र उत्तमः ॥

४७

यन्त्र निर्मितवस्तूनि त्यक्त्वा यो हस्तनिर्मितम् ।
तत्तद्-वर्णिकृतं युङ्क्ते स एवाऽस्ति स्ववर्णगः ॥

१ तमिल् नाडु सन्त अळ्वारेषुएकः "विष्णुचित्तः" तस्य पुत्री "गोदा" अथवा "आंडाल्"

२ जायमानकाल भगवत् कटाक्षात् "शठ"नामक वाताऽऽवरणं जित्वा "शठजित" नामकः "नम्माल्वार" इति प्रसिद्धः

४८
वेदाध्ययनसम्पन्नाद् मद्बाला यदधीयते ।
तदेव रक्षणं तस्य, दक्षिणा किं करिष्यति ?

४९
यन्त्रासुराद् ग्रामकला ननाश
विद्याऽसुरादात्मकला ननाश ।
उद्योगहीना अलसा जनाश्च
श्रद्धाविहीना नय-भक्ति-हीनाः ॥

५०
आत्मानात्म-विवेकार्थं करकौशलसिद्धये ।
श्रमिणो ज्ञानिनस्तांस्तान् रक्षेम च परस्परम् ॥

५१
मताधिकारे समता यथाऽऽगता
सुखाधिकारेऽपि तथैव सा भवेत् ।
कथं नु साध्येयमितीह चिन्त्यतां
रिक्ताऽऽढ्य भेदो नहि तत्र चोद्यताम् ॥

५२
रिक्तस्य गेहे सकला जनाश्च
तथैव सर्वे धनिनश्च गेहे
सुभोजनं कर्तुमयं क्रमोऽस्तु
सन्धार्यतां साम्य-सुबुद्धिभिस्तु ॥

५३
"रिक्ताऽऽढ्यभेदो न हि चिन्तनीयः"
इत्यस्य सत्यस्य कथं विवेकः ?
एकं हि रौप्यं यदि लभ्यते चेत्
सर्वं ह्यवश्यं परिपूर्यतां च ॥

५४
दशैव रूप्याणि यदर्जितानि
पर्याप्तवस्तूनि तदर्पणानि ।
यथाऽऽर्जनं मौल्यमपीह सर्वे
दातुं समं न्याय्यमिदं तु सत्यम् ॥

५५
अर्थस्य वैषम्यमतो नियोज्यं
चाऽर्थस्य साम्यं सकलैः सुभोज्यम् ।
सत्याऽऽभिमुख्येन विचिन्तनीयं
प्रेम्णैव साम्यं ननु साधनीयम् ॥

५६
अर्थवादस्य साम्राज्यं "सर्वमर्थवता जितम्" !
लोकतन्त्रस्य सालोक्यं "सर्वैरर्थोपभुज्यताम्" ॥

५७
जनाऽमौल्यं निष्कमौल्यं ह्यर्थवादे तदिष्यते ।
जनमौल्यं निष्कसाम्यं प्रजातन्त्रे तदिष्यते ।

५८
आढ्यरिक्तप्रभेदश्च स्वभावेन न विद्यते ।
कर्माधीनः स भेदश्च, भ्रान्त्यधीनं तु कर्म च ॥

५९
विना भ्रान्तिं वयं सर्वे पापक्षयविचक्षणाः ।
क्रान्ति कारुण्य भरिताः दत्वा भुञ्जीम सर्वदा ॥

६०
"तस्य तस्य च कर्मैव त्वेवं चोक्त्वा सु निर्घृणाः
यदि स्याम, पुनः कर्मचाऽऽप्लुत्याऽस्मासु नृत्यति

६१
लोकसाम्यस्य लाभोऽयं शुद्धात्मविजयो ध्रुवम्।
अध्यात्मविद्भिः सद्भिस्तु चिन्तनीयं विशेषतः

६२
साम्यनामकवादे तु साम्यं राज्यस्य हस्तगम् ।
प्रजासाम्यं पराधीनं ह्यनध्यात्मं ततश्च तत् ॥

६३
अर्थव्यवस्था ग्रामस्य ग्रामाधीना भवेद् यदि ।
"ग्रामराज्यं" प्रकथ्येत ग्रामबन्धुत्वमेव च ॥

६४
ग्रामस्वं, भूमिरर्थश्च श्रमो ज्ञानं यदस्ति यत् ।
परस्परैश्च लभ्यं तत् ग्राम-दाने कृते सति ॥

६५
न कर्मदोषो व्यक्तेश्च, क्रेयविक्रेयता न हि ।
ग्राम शक्तिः प्रवर्धेत, राज्यस्याऽपि न चाऽऽद्यता

६६
अर्थाधिक्यं नचाप्यस्ति, लोकसाम्यं सुरक्षितम् ।
सुखसाम्यं च लभ्येत, ततो राज्यं सहायकृत् ॥

६७
राज्ययोजन मद्याऽस्ति, "लोकस्य सहकारिता" ।
लोकयोजन मेवास्ति, "राज्यस्य सहकारिता" ॥

६८
तदाऽऽयाति बलं लोके, प्रजास्वाम्यं यथार्थकम् ।
अर्थवाद-प्रजावाद-साम्यवाद-रसायनम् ॥

६९
सर्व दोषविनिर्मुक्तं सर्ववृद्धिसहं तथा ।
सर्वतो गुणसङ्ग्राहि "ग्रामदानं" सदर्थकम् ॥

७०
मंडले मंडले चैव प्रान्ते प्रान्ते तथैव च ।
समग्रभारतं दाने सत्यमेव भविष्यति ॥

७१
अर्थेन भूमेः क्रयविक्रयो यः
श्रमस्य बुद्धेश्च स एव नास्ति ।
व्यक्तेश्च हस्ते सकलं चकास्ति
ग्रामाद् बहिर्नैव लयं प्रयाति ॥

७२
येनैव कार्यं क्रियते स्वशक्त्या
त्ववश्यमेवाऽस्य समर्प्यते चेत् ।
इदं समाजे विदधाति साम्यं
चाऽर्थस्य नीतौ नहि तारतम्यम् ॥

७३
सर्वे यथा-शक्ति पदार्थजातं
स्रष्टुं यदा कर्मकरा भवेम ।
यज्ञस्य चक्रेण सहोद्भवेन
प्रजासु सौख्यं स्थिरमेव भूयात् ॥

७४
तदैव दारिद्र्य-विनाशनं स्याद्
वर्ग प्रभेदोऽपि विलोपमायात् ।
नो चेद् वृथा वर्धत एव कक्ष्या,
ध्येयं सदा कारणमेव सर्वैः ॥

७५
तदा सुभिक्षं भवतीह लोके
दुर्भिक्ष मित्यादि तु देवलोके !
अल्प-व्ययेनैव यदा च राज्यं,
न वर्धते वस्तु महार्घतेयम् ॥

७६
अर्थशुद्धिं विनैवान्याः शुद्धयो व्यर्थतां गताः ।
योऽर्थतः शुचिरित्येव स शुचि र्मानवोत्तमः ॥

अर्थाऽऽनर्थ्यम्

७७
भक्तेर्विघ्नकरं धनं मद ? रं स्वातन्त्र्य-कंठे सृणिः
दैवास्तित्व विमर्दनं जनमनोविश्लेषकं दूरगम् ।
प्रेमार्द्रोत्तमभद्रमार्गगमने सूचीकठोराङ्कुरं
श्री-सम्पन्मुखनाम सुन्दरतया लोके मतिभ्रामकम्

७८
अर्थो नाम पदार्थ एव भुवने वस्तुस्वरूपंहि तत्
प्रत्याम्नायमिदं भवत्यथ नचाप्यर्थो ह्यनर्थो धनम् ।
अर्थत्वं ह्युपयोग कालनियतं क्षुद् दाह तृप्त्याऽऽवहं
चाऽन्नं नीरमदो निवासवसनं ह्यर्थो भवेत् तत्वतः

७९
तानर्थान् श्रमपूर्वकं न तु करोम्यस्म्येवमद्यालसः
त्वाऽऽलस्यस्य तथाविधस्य बहुधा प्युत्तेजकं यद् धनम्
आप्लुत्याहमतो नयामि जनतां मद्धस्तगां नान्यगां
द्रोहोऽयं ननु चिन्त्यतां जनगण स्वातन्त्र्य भङ्गः खलु !

८०

यत आदाने त्वधिकतरं
दाने त्वल्पं ह्यऽल्पतरम् ।
दानाऽऽदाने विषमतरं
सोऽन्याय्योऽर्थः सत्यमिदम् ॥

८१

घंटार्थघंटा यदि दीयते सा
परस्परं मानवमानवेषु ।
समत्वचिन्तां यदि संभरेम
तदाऽयमर्थो न भवेदनर्थः ॥

८२

अर्थशुद्धि र्यदा लोके सर्व कर्म समत्वतः ।
ऋणस्य दाता को वा स्यादादाता च कथं भवेत् ?

८३

ऋणाऽऽदानं समीचीनं
इति प्रायो मति भ्रमः ।
"ऋणदानं महापापं"
इति शास्त्रं प्रगर्जति ।

८४

किञ्चित् किञ्चित् काञ्चन-मुक्तौ
सञ्चित-निधितो यावन्मुक्तौ ।
लोभः क्वास्ति ? पापं नास्ति,
यदि ते बुद्धिः, सिद्धिर्भवति ॥

८५

धर्मेणार्थो धर्मायार्थो,
नाऽर्थोऽनर्थ स्त्वन्य अनर्थः ।
साधनशुद्धौ जीवन-शुद्धौ
यदि मे बुद्धिः, सिद्धि र्भवति ॥

यज्ञचक्रम्

८६

नारिकेल तरु पूगशीतलाः
शोभमान-विभवाः लसल्लताः
नागवल्लि-सुमहोत्सवं सदा
स्मारयन्ति खलु भूमिसंपदा ॥

८७

यास्तादृक्षे क्षेत्रमध्ये प्रणीरे
स्निग्धा वल्यश्चोर्ध्वगाः मुक्तसाम्यम् ।
"आपोहिष्ठाः" सौख्यमूलं समेषां
मन्त्रार्थं ताः स्मारयन्ते समक्षम् ॥

८८

आलवाल-शुभभाजनेष्वमूः
भोजनं रसमयं स्वकर्षकात् ।
प्राप्य पत्रफलसम्पदं पुनः
प्रार्पयन्ति ननु वृक्षदेवताः ॥

८९

यज्ञ चक्रमिदमेव वर्धतां
प्राज्ञलोक जनता सुजीवने
लोभमूलमपि सर्वतोमुखं
छिद्यतां कुभव-ताप-कारणम् ॥

९०

वर्षे वर्षे त्यागभावेऽपि सर्वे
त्वाऽऽढ्याः स्याम, स्वं वयं सर्वमेव ।
दत्वा, भोगं प्राप्नुयामाऽत्र तत्र
तस्माद् गोष्ठी-पूजनं चाऽन्न-दानम् ॥

९१

वर्धतां वर्धतां दानं भूमिपर्यन्तमेव च ।
कृष्या स्तृप्तिं भजन्तीह द्विषन्तो मित्ररूपताम् ॥

९२

मौल्योन्मुक्ता भवेद् भूमिः शाश्वती सुखसन्ततिः ।
सिद्ध्यत्येवार्थशुद्धिश्च राज्यशुद्धिस्तथैव च ॥

९३

नैवाऽऽदानं भूमिगं द्रव्यमूलं
नैवाऽभावो भूमिगोऽद्रव्यमूलः ।
सर्वे भूमिं ग्रामगां सेवमानाः
स्वाराज्यं तत् प्राप्नुवन्तीह तत्र ॥

९४-९५

* भूमिदानकथाचेयं "प्रण आयूँषि" तारिषत् ।
"दधिक्राविण्ण"मन्त्रार्थः "सुरभीनि मुखाकरत्"
ओम्भूरव्याहृतिमन्त्रार्थः
व्यक्तो नैव पुरा च मे ।
इदानीं भूमिदानार्थ–
पादयात्राऽर्थमातनोत् ॥

९६

शुद्धिरेवं मनुष्याणां शुद्धिरेवं च वस्तुनाम् ।
यज्ञचक्र-प्रसिद्ध्याऽपि विष्णोः प्रीतिश्च सिद्ध्यति ।

यथाशक्ति भ्रमनिरास

९७

आढ्येन दीयतामाढ्यं रिक्तेनाऽपि यथाबलम्
भूमि बुद्धि श्रमार्थाश्च संगच्छन्तां ततस्ततः ॥

९८

अन्योन्यं पालनं भद्रं, रिक्तं पूर्णं जलैर्यथा ।
सर्वेऽपि केनचिद् रिक्ताः आढ्याश्चाऽन्येन हेतुना ॥

९९

आढ्यरिक्त-प्रभेदोऽयं नियतो नहि विद्यते ।
सर्वैश्च सर्वं दत्तं चेद् यद्यदस्ति ततस्त्वितः

१००

सुखप्रवाहो वर्धेत नास्ति शोकस्य कारणम् ।
दानगङ्गा प्रवाहश्चेत् को वा सन्तापमृच्छति ? ॥

१०१

"आढ्येन क्रियतामाढ्यं रिक्तेनाऽपि यथा बलम्"
शास्त्रस्य वचनं त्वेतत् यज्ञ दानादि-कर्मसु ॥

* दधि, पयःकार्यत्वेन कार्यभूतं जगत्. क्राविण्णः आक्रान्तवतः भगवतः त्रिविक्रमस्य स्तोत्रादि कथनेन मुखनि सुरभीनि अकरवाम इति तन्मन्त्रखंडार्थः । प्रण इति । नः आंयूंषि अभिवृद्धानि आसन् इत्यादि, तन्मन्त्रभाष्ये द्रष्टव्यम्

४

१०२–१०३

आढ्येनाऽपि यथाशक्तीत्यत्राऽस्ति सुमहान् भ्रमः
नकुलोपाख्यानमेवाऽत्र प्रमाणं प्रभुसम्मतम् ॥
भिक्षाप्राप्तं दत्तमेवाऽपि सर्वं
पित्रा मात्राऽनश्नते यत्र पुत्रैः ।
तस्मिन् देशे भुक्तशेषे विलुंठन्
देहार्धे स्वे स्वर्णतां प्राप बभ्रुः ॥

१०४

ततः स नकुलः प्राप धर्मराजाध्वरं मुदा ।
बहुकालं विलुंठश्च नाऽऽप सौवर्णरूपताम् !

१०५

दाने रहस्यं स्वे राशौ यावानंशः प्रदीयते ।
दानस्य परिमाणेन त्वल्पाऽनल्पं न लोक्यताम्

१०६

यथाभागं प्रकुर्वीत दानं विनयभावतः ।
"अलुब्धां वृत्तिमाश्रित्य" यथाशक्तेरयं क्रमः ॥

निरुद्योग निवारणम्

१०७

मानवशक्तिर्नूनं क्षयीभवत्यहह विज्ञानेन ।
नेदं मानव ! सम्यक्, सदुपयोगिता नरस्याऽस्तु ॥

१०८

तदर्थं सुतथ्यं सुवैज्ञानिकं तत्
करस्थं स्वकार्यं समर्थं क्रियेत ।
स्वबाल्यादपेक्ष्य स्वविद्या प्रदेया
नरो भूत् कदामाऽप्यधीनो हि यन्त्रे ॥

१०९

प्रजाप्रभुत्वस्थिरता तदैव
यदैव लोकाः स्ववशाः पदार्थे ।
तदर्थमेवास्तु समस्तपल्याम्
स्वयं पदार्थाः स्वकरैः क्रियेरन् ॥

११०–१११

स्वहस्तकरणाच्चैव वर्धते हस्तचातुरी ।
मतिस्फूर्तिः प्रबुध्येत, क्रियावान् ब्रह्मविद् वरः ॥

वाणिज्यमार्गे बहवो हि दोषाः
स्वयं क्रियाऽभावत एव जाताः ।
स्वयंकृतानामुपभोगशैली
स्वतन्त्र तोषोऽपि निरोगता च ॥

११२

अर्थदोषो राज्यदोषो यन्त्रदोषस्तथैव च ।
केन्द्रीकरणतो यो यो, नाऽस्ति कोऽपि विकेन्द्रित ॥

११३

यन्त्रोद्यमः सर्वजनाय नाऽलं,
प्रजाप्रभुत्वस्य न वृद्धिहेतुः ।
उत्पादनापद्धतिरेव दुष्टा
न साम्यमेवैति वितारणेऽपि ॥

११४

ग्रामोद्यमः सर्वजनाय भूयात्,
कराग्रलक्ष्मीं विततां तनोति ।
उत्पत्ति-दानाऽवसरे च मध्ये
त्वकर्तृ-मध्यस्थ जना न सन्ति ॥

११५

यन्त्रोद्यमस्यास्ति तु मूल एव
लाभः प्रलोभो जनसेवनं च ।
जनोद्यमे नास्ति गुणेऽपि दृष्टिः
उत्पत्तिरेकैव बहु प्रवृद्धा ॥

११६

अतः समाजे बहुलं तु दोषाः
यन्त्रादिरीतावपि चाऽर्थरीतौ ॥
व्यवस्थितावेव निगूहितास्ते,
व्यर्थोपदेशा हि सतां सुनीतिः ॥

११७

महात्मगान्धेश्च रहस्यमेतज्
जनस्य सत्कार्यरुचेश्च दोषः ।
यथैव लभ्येत तथैव रीत्या
देशस्य विश्वस्य च चालनं स्यात् ॥

विश्व नीडम्

११८–११९

यद्यस्ति भेदस्य च वासना ते
रामस्य नाथोऽस्तु रसार्थकोऽयम् ।
रामश्च नाथो भवतीति यस्य
स "रामनाथो" द्विविधः पदार्थः
अभेदसंस्कार इहाऽस्ति चेद् दृढा
सर्वेऽपि सर्वत्र समागता वयम् ।
नो चेत् समाधौ परिनिष्ठिता वयं
"प्रमाणमन्तःकरणप्रवृत्तयः ." ॥

१२०

तथाऽपि सर्वत्र शुभाश्रयेषु
निराऽऽग्रहाः स्याम सुहार्दभावाः ।
एकं हि तत् सद् बहुधोच्यमानं
"सर्वेऽपि सङ्गत्य" नमो वदाम ॥

१२१

तत्राऽपि नो चेत् परिपक्वचित्तं
सर्वेऽपि सङ्गत्य भवाम मौने ।
परैरसंसर्गशुचित्व सत्वेऽ–
प्यये विदग्धाः प्रभवन्तु गोष्ठ्याम् ॥

१२२

ईशेतरेष्वेव सुसङ्गतास्तु
विद्यादि यानेषु भवाऽऽवहेषु ।

धनार्जनाद्येषु च–राज्यकार्ये–
ष्वहो विभक्ताः पुरुषोत्तमाऽग्रे !

१२३–१२४

य एव सर्वत्र समस्तभिन्ने–
ष्वहोऽनुगो व्याप्य समाऽऽविवेश ।
स एव पापादहहा विभज्यः
व्यावृत्तिरेवेयमतीव चिन्त्या ॥

यथैव रात्रौ तु समस्तपक्षिणां
विश्रामनीडं, सकलाऽऽत्मनां तथा ।
उदात्तभावं सकलं च मन्दिरं
भूयाज्जगत्याः "सुखविश्वनीडम्" ॥

१२५–१२६

अद्याऽस्ति योऽयं, न स पूर्णयोगः
त्वध्यात्मभूमौ स इहाऽद्य साध्यः ।
तदर्थमेवाऽस्ति समस्तलोके
विचारचर्चा कुतुकाऽऽवहास्ति ॥

आचारचर्चाऽपि च कथ्यमाना
राज्यप्रभावादिति भासमाना
सर्वोदयादेव सुबुद्धहृद्या
स्थिरा भयत्येव तथाऽनवद्या ॥

दृष्टि शुद्धिः

१२७

अन्तः प्रभावेन बहिः–प्रभावः
वशे क्रियेतैव, न चाऽन्यमार्गः ।
बहिः–प्रभावेन तु शाम्यतीव,
"सोऽन्तःप्रभावः" स्थिर शक्त एव ॥

१२८

प्रायेण पुंसां मतिरस्ति लोके
"बहिःप्रभावे हि बहुप्रभूता" ।
किं कारणं तत्र विचिन्महे चेत्
देहाऽऽत्मभासो हि विजृम्भते तत् ॥

१२९–१३०

"सर्वं सुसाध्यं वयमेव कुर्मः"
इत्यस्ति सर्वत्र महान् प्रमोहः ।
उत्साहवीर्ये तु सुशंसनिये
तथैव दृष्टि–प्रविवेक आस्ताम् ॥

दृष्टि र्हि सृष्टौ प्रथमा स्मृता सा
सर्वज्ञशक्तोऽपि स एव देवः ।
सृष्टेश्च पूर्वं बहु वीक्षते "स्याम्"
सङ्कल्पशक्तिर्हि समस्तमूलम् ॥

१३१

देशेषु देशेषु जनस्य याऽस्ति
सङ्कल्पशक्तिः खलु सोद्‌ध्रियेत ।
शुद्धे मनस्येव हि सा भवित्री,
सौम्यं मनः सर्वत एव मुख्यम् ॥

१३२–१३३

विकारमूला स्वविचारधारिका
विकारमेवाऽऽतनुते हि जीवने ।
भावस्य शुद्धिं च रुणद्धि सा भृशं
तथाऽपि जानति न लोकगो जनः ॥

आश्चर्य मेतत्तु दिनेष्वमीषु
त्वशोभनं भाति सुशोभनं वै ।
सुवास्तवं हास्य–पदाऽऽस्पदं च
सर्वं जगच्चक्र–विलासलास्यम् ॥

१३४

अर्थप्रधानं यदि जीवनं स्यात्
तदेव मुख्यं, परदैवतं च ।
गुणाश्च नीतौ प्रभवन्ति नैव,
द्वितीयकक्ष्यामभजन्त ते हा ॥

१३५-१३६

अर्थस्य सत्ता जगति प्रवृद्धा
प्रतिक्रियां प्राऽऽप च साम्यवादे ।
पुनश्च सा चेत्तु जनाधिपत्ये
आरोहशक्तिः शिथिलीभवेच्च ॥
मा भूत् तथेत्येव महान् प्रयत्नः
सर्वत्र देशेषु विशेषतोऽस्ति ।
अर्थस्य साम्ये समतोलनार्थः,
तथाऽपि बाधा बहुळीभवन्ति ॥

१३७

राज्यस्य शक्त्यैव मनः स्थितिर्हि
न शक्यते चारुतरं नियन्तुम् ।
जनेषु साध्वी प्रचकास्ति या तु
सा शक्तिरेवाऽस्ति सुसृष्टि-मूलम् ॥

१३८

विद्वज्जनाः पान्तु विवेकनिष्ठाः
वैरं भयं दूरत एव कृत्वा
पक्षे विपक्षेऽपि न सक्तचित्ताः
सङ्गत्य, विश्वं समपूतदृष्ट्या ॥

१३९

उदारभावेन सदाऽपि भाव्यम्,
परेषु निष्ठा न कदाऽपि नीचा ।
स्वयं कथातोऽपि श्रुतिः परैः स्यात्
पूर्वग्रहान् सर्वत एव हित्वा ॥

१४०

सदा शुभा दृष्टिरये विधेया
कुत्राऽपि मा भूदशुभेक्षणं हा ।
मैत्र्या स्वदृष्ट्या त्वहमेव पूर्वं
पश्यामि, पश्चादभिकामये ताम् ॥

१४१-१४२

सत्याऽऽग्रहादप्यतिवादभूम्नः
"सत्यग्रहः स्यात् पर-वेदनार्थः ।
दोषापनोदार्थकृतिर्मदीया
दुष्टेषु सख्यं भवतादुदुष्टम् ।
मनोविकारस्तु कदाऽपि माभूत्
केनापि कुत्रापि शुभाशुभेषु ।
प्रेम प्रकृष्टं, स्वयमेव सेवा
सर्वेषु तादात्म्यममेयमेयात् ॥

१४३

सुसूक्ष्मता या किल चाऽऽविरासीत्
विज्ञान-शोधेषु खगोळगेषु ।
तथैव पिंडे नरदेहमुंढे
मनोविशालं वहतादजांडे ॥

१४४

मतेश्च भेदेऽपि सतीह किं मे ?
मतेश्च भिन्ने ननु चेतनेऽहम् ।
शुभां स्वदृष्टिं करवाणि सत्यां
मिथ्या विमोहो मम माऽस्तु सत्ये ।

दृश्य शुद्धिः

१४५

श्रव्यात् कथाऽऽलाप-कलाविलासात्
दृश्यानि नूनं मनसः प्रियाणि ।
तदर्थं मायातमदो हि नाट्यं
वृद्धिं गतं यन्त्र-विवर्तितं च ॥

१४६

यन्त्रासुरस्यैव विजम्भणं हा
कलाऽपि नष्टा जगतीतलेऽद्य ।
व्यक्तेश्च देहस्य सुभावनायाः
प्राशस्त्यमश्नाति जडो हि यन्त्रः ॥

१४७

चित्रेषु दृश्येषु विलासभूम्ना
माता च वेश्येव यदा प्रदर्श्या ।
सर्वत्र वीथीषु विपट्टिकासु
विनैव लज्जां सहते नु सर्वः ॥

१४८

बाला युवानस्तरुणीजनाश्च
भिक्षाटका योगिजनाश्च हन्त !
बहिर्हि दृष्टैव च तानि चित्रा–
ण्यहो मनः स्वं प्रविदूषयन्ति ॥

१४९

इतोऽपि नाशः क अपेक्षणीयः ?
श्वो वर्धमाना जनसन्ततिर्हो !
मनोविदुष्टा कतरां करोति
सङ्कल्पशक्तिं ? सुविचार्यतां भोः ॥

१५०

अद्य प्ररूढा जनवञ्चना या
जनस्य शक्तिं शिथिलीकरोति ।
सेयं समस्ते जगति प्रवृद्धा
जनाधिपत्यस्य विनाशनार्थी ॥

१५१

अतश्च चित्राणि सुचारूरूपैः
प्रदर्शनीयानि, न लज्जमानि ।
वीथीषु भित्तौ च विकारहेतु
नैव प्रदर्श्यं ह्यपराध एषः ॥

१५२

नैकाऽपि माता च सती सहेत
त्विमां दशां भूरि तपस्विनीं ताम् ।
समाजनाशाय विवर्धमानं
चैतद्धि सर्वं प्रविभञ्जनीयम् ॥

१५३

शान्त्यैव सर्वे वयमेव तांस्तान्
संप्रार्थयामो निरवद्यतायै ।
शृण्वन्ति तेऽपीति शुभं वदामः,
नो चेत् तदा सौम्यहितं चरामः ॥

१५४

एतावता कालकलान्तरेण
निर्दिष्टकार्यं वयमेव कुर्मः ।
सर्वत्र तान्येव हि चित्रकाणि
स्वशुद्धि-कारीणि समुद्धरामः ॥

१५५

शान्त्यैव सर्वं ननु संस्क्रियेत
विधानमार्गेण सुधीरभूतैः ।
मातापितृभ्यां युवसंघगैश्च
दृश्यादिशुद्ध्यर्थविभावितैश्च ॥

१५६

"कामादिशास्त्राणि निगूहितानि,
तथा प्रवृद्धानि च दूषणानि ।
तस्मात् समस्तानि सदस्यकानि
भवन्तु, मास्त्वेव रहस्यकानि" ॥

१५७

इतीव या चाऽस्ति मनोविधारा
तस्याः किलेयं सुखनादयधारा ।
समाजनीतेश्च किलऽस्ति सीमा ?
मर्यादरामो ह्यत एव भूमा ॥

१५८

फलानुमेयानि समस्तकानि
शुभाशुभानीह नरस्य तानि ।
पाश्चात्यवृद्धानि गुणात्मकानि
सत्यं तु सर्वैं रनुकार्यकाणि ॥

१५९

प्रवृत्ति शुद्धिः

समाजसेवाः यदि न क्रियानुगाः,
न स्याद् विवृद्धि र्गुण शोधनात्मिका ।
कलङ्कहीनोऽपि भवेत् प्रसेवया
साफल्यमाप्नोति मनुष्यजन्मनः ॥

१६०

सेवाऽपि सर्वानुपरोधिनी स्याद्
यथास्थितिभ्रान्तिकवाटघाटा ।
अशान्तिमुत्तेजयतीह माऽस्तु
परस्परं सङ्गमनी च साऽस्तु ॥

१६१–१६२

प्रयत्नवादे त्वरिता समुत्सुका
जनाऽऽभिमुख्येन स्वकामहीनता ।
प्रयत्नशीलेऽपि न चास्त्वहङ्कृतिः
"करोति सर्वं चिदचित् प्रभोः कृतिः ॥

प्रवृत्तयः किङ्करतां भजन्ते
नैव स्वतन्त्राः खलु देहभाजः ।
विनम्रवृत्त्यैव घटेत कार्यं
स्यात् सर्वमेवं तु निवृत्तिरेव ॥

१६३

न साधनं मे बत किञ्चिदस्ति
सर्वं हि देवस्य सुकृत्यमस्ति !
उपायकोटौ न हि किञ्चिदस्ति
कैङ्कर्यकोटौ सकलं चकास्ति ॥

१६४

"नैवाऽहमेतच्च कदाऽपि कुर्वे"
नैषा सती केवलमप्रवृत्तिः ।
प्रवृत्तिसत्वेऽपि न भारभासे
सति, स्वभावेन निवृत्तिरेव ॥

१६५

आसक्तिवर्जं सुकृतो हि भक्त्या
क्रिया कलापोऽपि भवेदकर्म ।
समर्पणाऽऽख्येन निवेदनेन,
रहस्य मेतन्ननु वेदनीयम् ॥

१६६

निवृत्तिमन्तोऽपि प्रवृत्ति-तीक्ष्णाः
प्रवृत्तिमन्तोऽपि निवृत्तिसूक्ष्माः ।
मनः–प्रगर्वोऽस्ति नवेति पश्य,
समर्पणं पाप-विनाश-कारि ॥

१६७–१६८

निषिद्ध-कार्येषु निवृत्तिरिष्टा
चैतन्यकार्यं न तु साधनं सा ।
अनन्यभाजा घटमानदोषः
न बाधको जातु, स मोदनीयः ॥

नेदं सदा सर्व जनार्थवाक्यं
ह्यनन्यभावस्य सुगौरवाख्यम् ।
ऐकान्तिकात्यन्तिक भावनाग्नौ
सर्वं प्रदूयेत यथेषिकं हा ॥

१६९

प्रमादतोऽपि प्रणयेन वाऽपि
घटेत कार्यं, परमात्मना तु ।
महोन्नतेनैव न वाऽवलोक्यं,
प्रमोद–संमोद–सुभोजनाऽऽढ्यम् ॥

१७०

समस्तभावः सकलं च कर्म
समस्तवाचः पुरुषोत्तमे वै ।
समापनं यान्ति समस्तमूले
चाऽन्तःप्रविष्टे सकलात्मशासे ॥

१७१ १७२

देवस्तु पश्येदत एव भावं
योह्यस्ति चित्ते, सततं स्वभावम् ।
जानाति गृह्णति विशिष्टभावं
तमेव सर्वेषु मनोऽधिपोऽयम् ॥

स्वदोष-संछादन-घोटिका न
स्वदोष-संख्यानमहो बलं तु ।
परेषु दोषाऽऽकलनं न चाऽस्तु
तदर्थमेतत्सकला कथाऽस्तु ॥

१७३–१७४

क्रियत् प्रयत्ने कृत एव वाऽपि
भवत्यहो नैव प्रवृत्ति-शुद्धिः ।
इत्येव नम्रत्वसुभावनायै
समर्पणं स्यान् महती विशुद्धिः ॥

सर्वेषु धर्मेषु च मानवेषु
सङ्घेषु भक्तेषु च नैच्यभावम् ।
समर्पयन्त्येव, तदेव सत्यं
प्रवृत्ति-शुद्धि र्मनु-सन्ततीनाम् ॥

१७५

सर्वलाभः मल्लाभः

एका मदीया यदि दुष्कृतिः स्यात्
तस्याश्च भावप्रतरङ्गभूमा ।
जगत् समग्रं कलुषीकरोति
पुनश्च मय्येव विघट्टते हा ॥

१७६

अतोहि शास्त्रेषु सुकथ्यते तैः
"एकं तु पापं बहुधाऽनुभाव्यम् ।
बहोश्च कालाच्च न पच्यते यत्
हाऽनन्तरं तस्य निकृन्तनं स्यात्" ॥

१७७-१७८

द्वाभ्यां कराभ्यां यदि ताडयामि
मयाऽनुभोक्तव्यमसंख्यमेव ।
यदल्पकं वाऽपि सुकृत्यमेवं
तच्चाऽपि भोक्ष्ये प्रगुणीकृतं हा !

अल्पं कुकृत्यं न च चिन्तनीयं
स्वल्पं सुकृत्यं न विहासनीयम् ।
अल्पं कुकृत्यं बहुधा विबाधं
स्वल्पं च पुण्यं भयतोऽप्यबाधम् ।

१७९

लोके हि भावो वचनं क्रिया च
समानजातीयपरंपरागा ।
विज्ञान शास्त्रेषु यदेव दृश्यं
वेदान्त शास्त्रेऽपि तदेव दृश्यम् ॥

१८०–१८१

पापे कृते लाभविवृद्धिरस्ती-
त्येवं हि मन्येत यदेव लोके ।
भ्रान्तिश्च सैषा, नियमेन भूयात्
समूल नाशोऽनृतात् कुवर्तनात् ॥

तत्कालमाभासत एव लाभः,
त्वन्यस्य नाशात्तु स आगतश्चेत् ।
मल्लाभनाशाय सदाऽपि यत्नं
प्रकुर्वतेऽप्यन्यजना ह्यसंख्याः ॥

१८२

असत्प्रवाहश्च ततोऽपि वृद्धः
तस्माद्धि भद्रं न चकास्ति किञ्चित् ।
भयं भयं सर्वत एव चाऽस्ति,
विश्वासमान्द्यं ह्यनुभूयतेऽतः ॥

१८३-१८४

सर्वत्र लोकेऽत्र दिने दिनेऽपि
समेधते कष्टपरम्परा हि ।
कष्टस्य नाशाय सदैव सत्ये
स्थातुं प्रयत्नः करणीय एव ॥

पन्थाः सदाऽऽचारगतः सदा च
प्रलाभमेव प्रगुणीकरोति ।
इदं हि सत्यं नियतप्रियं च
जगत्यगत्या वरणीयमेव ॥

१८५

वाणिज्यकर्माऽपि गृहस्थ-कर्म
गृहे च यन् न्याय्यमदश्च भूयात् ।
अन्यत्र सर्वत्र, विवेचनीयं
न्याय्यं द्विधा नास्ति हि सर्वथाऽतः ॥

१८६

सर्वोदयश्चिन्तित एव सम्यक्
महात्मभिर्मानव सौख्यकामैः ।
सर्वस्य लाभो हि मदीयलाभः
सर्वस्य पुष्टिर्हि मदीयपुष्टिः ॥

१८७

स एव गृह्यतां पन्थाः यत् स्वयं सुखसाधनम् ।
परेषां विषये चाऽपि, सर्वेषां सुखमेधते ॥

१८८

स्वसुखे परदुःखं चेत् स्वसुखं न च सिद्ध्यति ।
सत्यं शिवं समद्वैतं चिन्त्यतां सर्वमानवैः ॥

१८९

गुणग्राहः

दोषग्रहो माऽस्तु गुणग्रहोऽस्तु
सर्वत्र सेऽयं हि परात्मपूजा ।
गुणस्य चिन्ता गुणकीर्तनं च
संसाधयत्यल्पविकल्पभूरि ॥

१९०

दोषग्रहे दोषविकीर्तने च
दोषा न शाम्यन्ति रहस्यमेतत् ।
तमस्तमः सर्वमितीरयन् कः
तमः समुत्पाटयितुं समर्थः ?

१९१

दीपः प्रणेयस्तमसः पुरस्तात्,
स्वयं तमो धावति कुत्र वेति ?
न ज्ञायते, तद्वदरे कुरु त्वं
"शठस्य शाठ्यं" न हि युज्यते च ॥

१९२-१९३

तस्मादयं *सूरिवरः +कवीन्द्रैः
देवाधिकोऽगायि निज-प्रबन्धे
देवस्य कारुण्यमहो न पूर्णं
स्वातन्त्र्यशक्त्या कुपितः सचाऽपि ॥

अज्ञात कोपस्य "शठारि सूरेः"
यदेव कारुण्यमहोद्भुतं तत् ।
परात् परस्याऽपि दयां प्रपूर्णां
न हि प्रपश्यामि, स दण्डधारी ॥

१९४

तस्मात् समस्तेषु सुधर्मवर्त्मसु
गुरो र्हि सत्ता बहुधाऽनुगीयते ।
देवाद् गुरुश्चैव कुतो महत्तरः ?
रहस्य मेतद् विदितं किलाऽधुना ॥

*तमिल् नाडु सन्तः "नम्मालवार" आख्यः शठकोप सूरिः
+"मधुरकवि" नामकैः तच्छिष्यैः कृष्णः पूर्णः पापविकोपी ।
त्वं तु सुपूर्णस्त्वकुतःकोपी इति शठकोपमधिकृत्य गीतम्
"कण्णिनुणशिरुत्ताम्बु" नामक द्राविडदिव्यप्रबन्धे ।

१९५

"कृते प्रतीकारः" इतीह कथ्यते
तस्यार्थमेवं स्वरसं तु संशृणु ।
शाठ्यं कृतं चेत् प्रतिशाठ्यमेव च
ह्यर्थाद् भवेच्छाठ्य-विसर्जनं स्वयम् ॥

१९६

तस्मादृधि सूरेर्भगवत्-प्रसादात्
"शठारि"रित्येव सुनाम नाम ।
"मच्छाठ्यमालोक्य कृपाप्रपूर्णः"
इत्येव पूर्वै "र्मधुरै" रगायि ॥

१९७

सर्वेऽपि तस्मा"च्छठकोप-सूरौ"
"मन्नाथ" इत्येव सुभक्तिभाजः ।
प्रेम्णो जयोऽयं, न तु दोषदर्शी
सम्भाव्यते तादृशगौरवेण ॥

१९८-१९९

देवदृष्ट्या सदा योऽयं
लोकदृष्ट्याऽपि चोत्तमः ।
न मध्यमो वा पुरुषः
तृतीयो नैव चाऽपि च ॥
सर्वाऽविरोध सम्पत्तिः
सर्वप्रेम-सुपात्रता ।
अयि भोः कस्य वाऽन्यस्य
*"नम्मालवार्" इति नाम तत् !

२००

सर्वे शठारेरनुयायिनो वयं
सर्वत्र शोभां हि विचिन्महे वयम् ।
निन्दां न कस्याऽपि च कुर्महे वयं
गुरोश्च सम्बन्ध-विभूषिता वयम् ।

२०१-२०२

कृते हि पुंसा यदु हिंस्रभावात्
अहिंसकनैव प्रतिक्रियेत ।
हिंसार्थहिंसा न भवेत् "प्रतिश्च"
पूर्वस्य दासो हि स हिंसकस्तु ! ॥
अहिंसकस्त्वेव भवेत् स्वतन्त्रः
सत्यं सदा यश्च वदेत धीरः ।
प्रेमैव सर्वत्र करोति यश्च
तेनैव दोषः प्रविलाप्यते च ॥

२०३

अहं पूर्वं यदा चोरः चोरशङ्का सदाऽभवत् ।
अहं पूर्वं यदा शुद्धः नैव सन्ति मदोद्धताः ॥

२०४

सत्यं वाच्यं मधुरं वाच्यं
सत्यं वाच्यं नैवाऽमधुरम् ।
अनृतं मधुरं नैव च वाच्यं
एष हि धर्मः प्रसनातनः ॥

बालवलम्

२०५

'वेगो मा भूत् प्रणतसुभगे बालकानां च यूनां
अद्यैव श्वः किमपि भविता ? प्रज्वलज्ज्योतिरा-
स्ताम् ।
सक्तिर्माभू'दिति च विदितैरप्यहो कथ्यते यैः
नैवाऽऽरूढं सुदृढमननं ज्ञानविज्ञानगं तेः ॥

२०६

सर्वत्र वेगोद्यतिकाम्यतेऽधुना
यानेषु पाकेषु तथाऽर्थसाधने ।

* अयं तमिळ भाषाशब्दः, "अस्माकं स्वामी" इत्यर्थं बोधयति । 'अखिलजगत् स्वामिन् अस्मत् स्वामिन्' इत्यादिवत् ।

५

वेगस्य योगो हि युगस्य लक्षणं
बाल्येषु सोऽयुक्त इवावभाति हा ॥

२०७

सेयं च काष्ठा ह्यविचारशोधनात्
अर्थस्य वादात् प्रविमोहिता जने ।
सर्वेऽपि लोकाऽनुगतिं सरन्ति चेत्
नेयं स्वविज्ञान युगाऽनुसारिदा ॥

२०८

बाला हि वेगेन मुमुक्षवः स्युः
बाल्येषु वर्तेत भृशं बलं वै ।
तानेवमेवाऽद्य हतस्ववीर्यान्
कर्तुं प्रयत्नः क्रियते च वृद्धैः ॥

२०९

अध्यात्मं निरपायमेव नियतं सर्वस्य सर्वत्रचाऽ
पीत्येवं शुभलक्षणस्य मननात् स्यादेव बालोन्नतिः
अध्यात्मं व्यवहारदूर''मिति वै भ्रान्तिर्यदाऽवर्तत
कालः सोऽयमये गतः कलियुगे विज्ञानगे,
बुद्ध्यताम् ॥

२१०

स्तूयन्ते सनकादिबालकगणाः भक्तिप्रदास्ते मताः
प्रह्लादो ध्रुव इत्यहो शुकमुनिर्बाला इहाः सम्मताः
बाल्यं तद्धि मनोहरं प्रभुरसौ स्वीकृत्य
वलयध्वरे
शेते पत्रपुटे च कारणशिशुः, ● सम्पत्कुमारो'
ऽर्भकः ॥

२११

बालानां बलशालिनां बहुमतध्यानादिसत्कर्मणां
लीलार्थं प्रयतामहे तनुजनैर्गर्ते वयं पातितुम् ।
वैवाह्यादिवचोविलासबडिशे मोहोऽसकृद्
योप्यते
तं तं मोहमतीत्य तिष्ठति यदा बालः स धन्यो
महान् ॥

२१२

बालश्रीः श्रीर् निरवद्या
जीवनभवने स्थैर्यतलो ।
स्थिर तल विरहे सौधं चोर्ध्वं
घटते? घटते नैव च भवते !

परिपूर्ण सेवा

२१३-२१४

स्वरूपरूपे च गुणाः विभूतिः
चाऽन्योन्यपुष्टाः न हि खंडितास्ताः ।
केचित् स्वरूपस्य मुखेन सर्वं
त्वन्ये विभूतेर्मुखतो हि सर्वम् ॥

केचित्तु रूपस्य मुखेन सर्वं
केचिद् गुणस्यैव मुखेन सर्वम् ।
एवं च सर्वे मुखभेदमात्रात्
उपासते. नाऽस्ति पृथक् स्थितिर्वै ॥

२१५

उल्लेखभेदो हि रुचि-प्रयुक्तः
लोके तु भिन्ना रुचिरिष्यते हि ।
एकं तु गम्यं सकलैः प्रलभ्यं
उपासनाभेद, अथो फलैक्यम् ॥

२१६

स्वरूपरूपेषु गुणेषु भूत्यां
ह्येकस्य सेवाऽपि यदा सुसिद्धा ।
चतुःसुसेवाऽपि सुखेन सिद्धा
नाऽपूर्णगा स्वस्य कदाऽपि विद्या ॥

● कर्णाटके "मेलुकोटे" अथवा "तिरुनारायणपुरं" क्षेत्रे विराजमाना उत्सव मूर्तिः । रामानुजेन देह्लीतः यदा-आहूता पुत्रवत् आचार्यस्य अङ्कमारूढेति एतिह्यम् ।

२१७-२१८

यः कोऽपि यं वा कुरुते स्वधर्मं
मति-प्रभेदं जनयेन्न विद्वान् ।
स्पर्धादि दोषाः न च संस्पृशन्ति
सर्वाः समानाः कृतयो भवन्ति ॥

स्वस्यैव कार्ये सुखतृप्तिराभवेत्
अतृप्तिरेवाऽस्ति विपत्-परम्परा ।
स्वधर्महानिः परधर्मन्यूनता
सर्वेषु भागेषु कुमारकोशता ॥

२१९-२२०

स्वरूपसेवा त्रितयप्रसेवा
विभूतिसेवाऽपि समस्तसेवा ।
रूपप्रसेवाऽपि समग्रसेवा
गुणप्रसेवाऽप्यत्रशिष्टसेवा ॥

इयं हि सेवा परिपूर्णसेवा,
दृष्ट्यल्पसेवाऽपरिपूर्णसेवा ।
जगत् समस्तं कलुषीकरोति,
पूर्णा हि सेवा प्रशमीकरोति ॥

२२१

अपूर्णता माऽस्तु सपूर्णतैव
संसाधनीयेति सतां सुसूक्तिः ।
अतो हि सर्वेऽपि च लोकधर्माः
रुचिप्रभिन्नाः परिपूर्णसेवाः ॥

२२२

तथाऽप्यपूर्णत्वमिवाऽवभाति
तत् सर्व मेतद्धि मनोविलासः ।
मनो विजित्यैव समाऽऽदरो हि
सर्वेषु धर्मेषु सुसाधनीयः ॥

२२३-२२४

गुरोः स्वनिष्ठा यदि पूर्णभाग्या
लोके हि सर्वे गुरवश्च भोग्याः ।
अतश्च सद्भिः प्रविगीयते नु
'सर्वेभ्य एवाऽस्तु नमो गुरुभ्यः' ॥

रूपस्य निष्ठा ननु सर्वरूपं
यदाऽऽत्मसात् कर्तुमधिक्रियेत ।
तदैव लोके कलह-प्रशान्तिः
धर्मेषु धर्मेषु च सख्यमेति ॥

२२५-२२६

सर्वाणि रुपाणि विचित्य धीरः
सर्वाणि नामानि चकार वीरः ।
अन्तः प्रवेशेन च नामरूप-
व्याकार एवात्र शुभप्रमाणम् ॥

धर्मेषु धर्मेषु यदा हि खंडनं,
लोके ह्यधर्मेषु विवृद्धिमंडनम् ।
सुसङ्गतिं प्राप्य निबद्धकृच्छगाः
सर्वे वयं स्याम स्वधर्मस्वच्छगाः ॥

२२७

धर्मस्य नामाऽपि च यैर्विसृष्टं
प्रामाणिकास्ते निजभक्तिभाजः ।
स्वस्वेषु तन्त्रेषु निविष्टभावाः
विभूति सेवां हि प्रकुर्वते ते ॥

२२८

वेदान्तभाषा न तु रोचते चेत्
विज्ञानभाषा परिगृह्यते तैः ।
वेदान्तविज्ञानकले उभे ते
अल्पं मनो मास्त्विति संवदेते ॥

२२९

महामनो यद्धि तदेव सद्यः
आत्मान मेवाऽनुवदेत सत्यम् ।
भाषाप्रभेदो, न हि भावभेदः
नरे नरे भिन्न इवाऽपि भासे ॥

२३०

विज्ञान मायातमदोऽनभिज्ञं
ज्ञातं च किञ्चिद् बहु शिष्यतेऽज्ञम् ।
तावदृधि पर्यन्तमये प्रयाणं
आऽऽध्यात्म मा भाति "*चतुर्थमानम्"

२३१

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्यात्मना वा प्रकृतेः स्वभावात् ।
करोति यो यत् सकलं परस्मै
नारायणायेति समर्पणीयम् ॥

२३२-२३३

इयान् विवेको हि सुमुख्य एव
हिंसा न भूयात्, सुखशान्तिरेव ।
जगत्-समस्तेऽपि सुवाञ्छनीया
सर्वेऽपि बन्धुत्व-समत्व-युक्ताः ॥

विज्ञानवृद्धिर्बहुवस्तुवृद्धिः
तदैव शोभेत जगत्-समृद्धिः ।
सुसंघटेताऽपि च वुद्धिसिद्धिः
अहिंसयेत्येकमत-प्रसिद्धिः ॥

२३४

श्लोकद्वयोक्तो हि सुधर्मसारः
तदर्थमेवाऽस्तु प्रयत्नभारः ।
स्थिरा तदा स्यात् परिपूर्णसेवा
सर्वे मनुष्या वयमेक एव ॥

२३५

युद्धस्य मूलं हि विनाशनीयं
हिंसा न तावज्जनशक्तिरेवम् ।
दृश्येत या पक्षविपक्षनीतिः
केषां चिदेवाऽस्ति हि मृत्युभीतिः ॥

२३६

अल्पप्रभावोऽपि न चाऽस्ति धर्मः
बहुप्रभावोऽपि न चाऽस्ति धर्मः ।
सर्वप्रभावो हि सुमुख्यधर्मः
युद्धप्रभावेन जगत्यधर्मः ॥

२३७-२३८

युद्धप्रभावेन हि सर्वदुःखं
युद्धप्रभावेन हि वस्त्वलाभः ।
युद्धप्रभावेन महाऽर्धता सा
युद्ध-प्रभावो हि निकृन्तनीयः ॥

स एव धर्मोऽधुना स्वयंवरः
तदर्थमेवाऽस्तु कृतेः प्रसारः ।
केषां चिदेवाऽस्ति यदाऽधिकारः
युद्धं प्रबद्धुं न हि शक्तिकारः ॥

२३९

इदं च युद्धं सकलैश्च देशैः,
तदर्थमेवाऽस्ति "सहाधिवासः" ।
त्याज्यं हि शस्त्रं सकलाऽपदस्त्रम्
विकल्पशास्त्रं न हि नेत्रपात्रम् ॥

२४०

तत्तद्-विकेन्द्रे स्वसमूहभूमौ
सर्वानुमत्या जनसेवनं चेत् ।
"अशान्तकार्येऽहमयं न भागी"
त्वित्येव सर्वैः शपथे कृते तु ॥

---

* Fourth Dimension

२४१

प्रजा-प्रभुत्वस्य निजं प्रसाद्यं
प्रजाश्च साक्षादनुशासने स्वे ।
यथा भवेयुः, स तथा च मार्गः
ह्यन्वेषणीयो जनताभिरेव ।

२४२

"ते ते च कुर्वन्त्विवति" "तेति वादः"
प्रजाप्रभुत्वस्य बलक्षयार्थः ।
"वयं प्रकुर्मो गणसेवका हा
अस्मत्तलं स्वर्गमिदं प्रकुर्मः" ॥

२४३

प्रजाप्रभुत्वस्य तु यौवनं स्यात्
उत्थाप्यतां तस्य च बालभावः ।
सर्वानुमत्या स्वक शासकाः स्युः
स्वयं प्रजा सत्पथमावलम्बेत् ॥

२४४

यथैव राजा वदति स्म पूर्वं
तथैव पक्षो वदताद् मेवम् ।
'अस्मान् प्रजानायक पद्दतो हि
कदापि यूयं न निपातयध्वम्' ॥

२४५

परं तु कृष्णो वदति स्वगीते
सर्वेऽपि स्वोद्धाग्मये स्वकीयम् ।
स्वहस्तगं त्वेव कुरुध्वमन्यैः
प्रशस्तमेवाऽपि न सेत्स्यतीदम् ॥

२४६

"सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।"
इदं सत्यं मुनीनां तत् स्वानुभूतिचरं वचः ॥

२४७

अन्यदेश छुरिका यथा गलं
मेषकस्य परमेव कृतन्ति ।
स्वीयदेश छुरिकाऽपि तद्गलं
स्वीयतन्त्रविरहं न कृतन्ति ?

२४८

प्रजाप्रभुत्व प्रथमस्वचिन्हं
पर प्रभुत्वादपि स्वीयराज्यम् ।
ततोऽपि चोत्तारक सूक्ष्मचिन्हं
कुराज्यभीतेऽपि सौख्यराज्यात् ॥

२४९

भेतव्यमेवैव मतो प्रजाभिः
स्वशक्तिसम्पद् विमलीक्रियेत ।
परस्पराऽऽलम्बनमेव धर्मात्
स्वरक्षणं सर्वसुरक्षणं स्यात् ॥

२५०

देशस्य भक्तिः स्थलभक्तितः स्यात्
स्थलीयसेवा स्थललोक एव ।
स्थिरा स्थिता चेत् स्थलबुद्धितश्च
ततश्च साध्यं भवताद् द्वितीयम् ॥

२५१

तपस्विलोकाश्च विदग्धलोकाः
स्त्रीशक्ति-वाणिज्य-सुराज्यगाश्च
लोकाश्च पश्चाऽपि सुसङ्गताश्च
कटिप्रबंधाः स्वरसा भवन्तु ॥

इति तिरुनारायणपुरं अरैयर् दासस्य कृतिषु
स्वानुभूतित्रिवेणीनामक जीवनोज्जीवन काव्ये
विचारगङ्गानामक द्वितीयसर्गे पूर्वार्धम्



अथ स्वानुभूतित्रिवेणीनामक जीवनोज्जीवन काव्ये

## विचार गङ्गा नामक द्वितीयः सर्गः

( तत्र उत्तरार्धम् )

वेदान्त विज्ञाने

१

व्यक्त्यर्थमेवाऽभवन् गुणाश्च ये
समाजसत्तार्थमपेक्षितास्ते ।
अद्यैव, यः कोऽपि सुसूक्ष्मकास्त्रः
जगत् समग्रं प्रविनाशयेदहो ॥

२

तस्मादिदानीं परिहार्यमेव
हिंसा प्रलोभोऽनृतं च दूषणम् ।
गुणस्य मूल्यं प्रविवृद्धमासीत्
विज्ञानकालस्य महत फलं तत् !

३

"सर्वं हि सर्वत्र तु वर्तते सदा"
योगस्य शक्तेरिदमास दर्शनम् ।
यत् तत् तदेवाऽद्य तु सर्वथा नरैः
विज्ञान यन्त्रै रनुभूयते स्थितैः ॥

४

यत्राऽपि कुत्राऽपि च शब्द आस्ते
वयं हि शृण्मः प्रतियन्त्रकेण ।
यत्राऽपि कुत्राऽपि च रूपमास्ते
वयं तु पश्याम इह स्थिता वै ॥

५

विज्ञान वृद्धि र्न विरुद्ध्यते क्वचित्
त्विवतोऽपि वृद्धिः प्रभवत्वरे द्रुतम् ।
वेदान्त-वैराग्य गुणादि वृद्धयो
विज्ञान-काले त्वनिवार्य-वैभवाः ॥

६

विज्ञान-वृद्धेः किल पूर्वकाले
ये वा गुणा यद्यपि स्वल्पमौल्याः ।
विज्ञानवृद्धावधुना किलैते
गुणादयः सन्ति बहुप्रमौल्याः ॥

७

तस्माद्धि वेदान्त-जयोऽयमस्ति
विज्ञान-वृद्धौ न हि भीतिरस्ति ।
वेदान्तिभिश्चाऽपि स्व-पूर्ण धर्माः
सुसूक्ष्ममेव ह्यनुवर्तनीयाः ॥

८

वेदान्तिभिश्चाऽपि सहाऽधिवासः
विज्ञानिनां शोभत एव रम्यः ।
विज्ञानगैश्चाऽपि तथैव वेद-
वेदान्तिनोऽपीह समाऽऽवसन्तु ।

९

परस्परस्यापि शुभप्रभातः
समग्र विश्वस्य सुख-प्रकाशः ।
पङ्ग्वन्धकस्येव समालभेत
भूमिश्च वैकुंठसमा लसेत ॥

१०

अध्यात्मशक्त्या निरपायताऽऽगता
विज्ञान शक्ते रुपयोगिताऽऽगता ।
विज्ञान शक्त्या गतिशीलताऽऽगता ।
त्वध्यात्म शक्त्या सुविवेकचारुता ॥

११

वेदान्तिनश्चाऽपि यथा विहारं
पुरातनादेव च कालतो हि ।

कुर्वन्ति, विज्ञानिन एव चाऽपि
लोकाश्रयाः सन्तु चरन्त एव ॥

१२

श्रद्धान्ध्य-जाड्यानि विधूय दूरात्
वेदान्तिनश्चापि समस्तजीवान् ।
स्वसाम्यदृष्ट्या रसजीवनेष्ट्या
नयन्तु शुभ्रां पदवीं सुदृष्ट्या ॥

आस्तिक--नास्तिकौ

१३

हिंसाऽनृतं, स्वीयपरप्रभेदः
आस्तिक्यनास्तिक्यमतप्रभेदः ।
"स्व-स्व-प्रदेशो"ऽथ "मदीयभाषा"
"त्वदीयभाषे" ति न चारु-शोभा ॥

१४

असत्योपेय कांक्षी यः योऽप्रियोपायसाधनः ।
द्वावेतौ नास्तिकौ लोके, "नास्ति ब्रह्मेति" यो न सः ॥

१५

'अस्ति ब्रह्मेति' चेद् वेदाप्यल्पध्येयः स नास्तिकः ।
"अस्ति ब्रह्मेति" चेद् वेद हिंस्रोपायः स नास्तिकः ॥

१६

नास्तिको भवति चेदपीह यो
व्यापको भवति ध्येयचिन्तने ।
शुद्धिमान् यदि च मार्गचिन्तने
त्वास्तिकः स खलु सेव्य एव हा ॥

१७

ब्रह्माऽऽग्रहो यद्यपि मङ्गलाऽऽवहः
तथाऽऽपि भाव्यं सकलैर्निराऽऽग्रहैः ।
न दैवमेवाऽपि वदन् स्मरन् नवा
द्विधाऽपि चेद् द्वावपि सम्मतौ हरेः ॥

१८

यतो हि वीक्षेत परात् परैव
समस्तचैतन्य मचेतनं वा ।
मूला स्वशक्तिः रसवत्सला या
मातेव वृङ्क्ते तदपत्यकानि ॥

१९

पुत्रो हि मन्येत 'नमेऽस्ति माता,'
माता तथा नैव विभावयेत् सा
ब्रह्माऽस्ति नैवेति वदन्तु धीराः
का वा क्षतिर्ब्रह्मण एव सत्या !

२०

स्वकीयस्वीकारत एव रम्या
"परस्य स्वीकार" अहो सुगम्या ।
मार्जारडिंभादपि वानरीयः
स्वीय प्रशक्त्या विफलीभवेच्च ॥

२१

कथाऽकथा नैव हि मुख्यभूता
प्रभोः कृपैवैवहि सारभूता ।
आस्तिक्यवादेऽपि विचार दोषात्
प्रतिक्रिया, नास्तिकताऽऽजगाम ॥

२२

साधनं शोभनं पुसां साध्ये नयति पारमे ।
परमं रटमानश्च हन्ते साधनशुद्धिमान् ॥

२३

पराऽऽग्रहो विमुच्यतां
निजाग्रहो न मुच्यताम् ।
पराऽप्रियं विमुच्यतां
निजं हितं न मुच्यताम् ॥

२४

देवनाम गृणन् योन्यः यथावाऽपि तथा भवेत्
नाऽहं भवामि तन्मार्गे देवनाम गृणन् न वा ॥

२५

हेयोपादेयविषये सूक्ष्म ज्ञानं त्वपेक्ष्यते ।
भवितव्यं मया नित्यं प्रकृत्यात्मविवेकिना ॥

२६

प्रकृतौ गुणदोषाः स्युः न ते ह्यात्मगता इति ।
ताटस्थ्यं प्रकृतौ धार्यं गौरवं प्रेम चाऽऽत्मसु ।

२७

भक्तेरिदं चोत्तमसन्निदर्शनं
शक्तेरिदं चोत्तमसन्निदर्शनम् ।
व्यक्तेरिदं निन्दन मस्त्यभक्तिदं
व्यक्तेरिदं निन्दन मस्त्यशक्तिदम् ॥

२८

अशक्त्यभक्ती हि महोच्चगैश्च
राज्याऽऽश्रयैः पक्षिविपक्षिभिश्च ।
जात्याऽऽश्रयैः सज्जनलोकवर्यैः
अर्धानुमोद्ये कतिचित् प्रसङ्गे ॥

२९

राजनीत्यां पक्षनीतिः
समाजे जातिगा च सा ।
मुच्यते यदि, तत्रापि
भक्तिरित्यभिधीयते ॥

मानुषाऽऽनन्दः

३०

भाषेति नास्त्येव निसर्गसिद्धा
वाण्येव वागिन्द्रियशक्तिसिद्धा ।
अभ्यासवश्या हि समस्तभाषाः
भाषाविभागो न हि मूलभूतः ॥

३१

मातुर्हि बाला यदि दूरवसेरन्
भिन्नप्रभिन्नेषु विदेशकेषु ।
तास्ता हि भाषा ललितं वदेयुः,
मातृप्रभाषा भवति ध्रुवा नो ।

३२

वागेव हि मनुष्यस्य विशेषोऽयं तदन्यतः ।
"वागिन्द्रियं" हि कथ्येत "भाषेन्द्रिय" मिदं
न हि ॥

३३

देशोऽपि च तथैवाऽस्ति कल्पितो, न हि वास्तवः
समस्तभूमिरेवाऽस्ति मन्माताऽहं जगत्सुतः ॥

३४

"सर्वा पृथ्वी वित्तपूर्णा" यदि स्यात्
कथ्येतैषो मानुषाऽऽनन्द एव ।
अल्पा पृथ्वी दुःख दुखाय चैव
नित्यं सर्वैः सर्वथा भूयतेऽनु ॥

३५

मद्देश भावोऽपि जगद्विलीनः,
प्रान्तत्वमेयात्, तदु मंडले च ।
ग्रामस्य भावोऽभवत् प्रमंडले,
ग्रामे कुलं मेऽन्तरधात् सुखेन ॥

३६

ग्रामो हि वृद्धं मम सत्कुलं स्यात्
मांडल्य मेवाऽप्य भवत् प्रदेशः ।
जगत् समग्रं हि मदीयदेशः
सोऽहं प्रजा भो जगतीतलस्य ॥

३७

देशस्थ एवाऽस्मि न देशमात्रगः
प्रान्तीय एवाऽस्मि तथैव देशगः
कुलस्थ एवाऽस्मि, तथैव ग्रामगः
ग्रामस्थ एवास्मि तथैव स्वस्थकः ॥

अपत्यनियन्त्रणं उत यन्त्रनियन्त्रणम् ?

३८

अपत्यवृद्धिस्तु निषिध्यतेऽधुना
तत्-कारणं कथ्यत एव मिथ्या ।
करैक्यमेवं वदनद्वयं चेत्
तदा नु तत् कारणमक्रम्प्यम् ॥

३९

कारुण्यमूर्तिं भगवांस्तु लोके
कार्यं प्रकर्तुं विससर्ज पाणी ।
एकं तु भोक्तुं वदनं च कुक्षिं
तथाऽपि केचिद् वितथं वदन्ति ॥

४०

"न सन्ति खाद्यानि जगत्यहो नु
तस्माद्धि सन्तान-नियन्त्रणं स्यात्
तदा तु स्वल्पैः सुसुखेन वस्तुं
प्रशक्यते, नास्ति तु सर्वहानिः ॥

४१

यन्त्राऽसुरस्यास्ति विजृम्भणं तत्
उद्योगनाशं प्रविकुर्वतोऽरम् ।
यस्यास्ति दोषः सतु शिक्षणीयः
दोदूष्यते चैव शिशु-प्रवृद्धिः ॥

४२

एते हि सुभ्रान्तिविमूढचित्ताः
नेदं मनुष्यस्य विभूषणं च ।
वैज्ञानिकी दृष्टिरपीह कार्ये
नास्त्येव नास्त्येव, सुचिन्त्यतां भो ॥

४३

"बीजानि भूमौ खलु सूप्यतां तु
फलानि धान्यानि च संत्यजध्वम् ।
यदर्थ मेवाऽस्ति च यत्क्रिया सा
स्यात् कारणं, माऽस्तु फलं तु तस्य" ॥

४४

नेयं हि युक्तिः सुविचार्यतार्हा
यदि प्ररोहः क्रियते, ऽनुभाव्यः ।
नैवानुभूयेत यदा फलं तु
बीजानि वंध्यानि कुतः क्रियन्ते ? ॥

४५

तस्माद् वरं संयत-जीवनं जने
तदर्थमेवाऽस्तु जनेषु साम्प्रतम् ॥
विचारचर्चा प्रविवेकपूर्णगा
न चेद् भवेन मानवहानिरेव वा ॥

४६

"पापं तु कृत्वा फलमस्तु मा मे"
नेदं निसर्गस्य नियामकं च ।
स्त्रीपुंसयु सम्बन्ध अधोमुखः स्यान्
न प्रीति राऽऽस्ते न च :नीतिरास्ते ॥

४७

संजायामानाऽखिलजीविनां तु
ह्यस्त्येव बहन्नमथाऽपि केचित् ।
कारुण्य-हीनाः प्रविलोभलुब्धाः
क्रीडन्ति ते त्वन्नजना न सन्ति ॥

४८

इयं तु लीला न विषह्यतां च
स्वयं तु चिन्ता क्रियतां समीची ।
भ्रूणप्रहत्यां त्यजत प्रजा भोः
दारेषु भूयाद् "दशपुत्र"लाभः ॥

४९

यत् कार्यमावश्यकमेव यन्त्रैः
तदर्थमेवेति विवेक अस्तु ।
हस्तेन यद्यत् सुखकृत्यमस्ति
यन्त्रश्च दूरीक्रियतां तदर्थम् ॥

५०

देहोऽपि यन्त्रः खलु चालयतां रे
कार्यं सदा कौशलपूर्वकं स्यात् ।
स्वातन्त्र्यसत्ता च सुरक्षिताऽभूत्
स्वकीय मालम्बनमेव रक्षा ॥

५१

यत्राऽस्ति संख्या बहुला जनानां
यन्त्रस्य योगो मित एव तत्र ।
यत्राऽस्ति संख्या विरला जनानां
तत्राऽस्तु यन्त्रस्य विवृद्धिरेव ॥

५२

वैज्ञानिको यन्त्र-विवेक अस्तु
यन्त्राऽऽश्रितो माऽस्तु जनप्रमोहः ।
गान्धी विनोबादिभिरेव मस्ति
चाऽङ्गीकृतं चारुतमं समग्रम् ॥

५३

सर्वत्र मा भूदनुकार एव,
विवेकपूर्वं ननु वर्तितव्यम् ।
यन्त्रं तु यन्तव्यमितीह सत्यं
अपत्यसम्पन् न खिलीक्रियेत ॥

५४

कथं कथं भक्तजना भवेयुः !
विज्ञान-मेधाविन एव वा स्युः !
निषेक-वन्ध्यत्वमिदं विदृष्टं
विश्वस्य कल्याणमहो विनष्टम् ॥

५५

अयं हि मोहः प्रविसार्यतेऽद्य
त्वर्थस्य वादेन दिने दिने वै ।
अर्थस्य दासा यदि सम्भवामः
वयं त्वनर्थं बहुलं भजामः ॥

५६

गान्धीप्रयोगः कुत एव हेयः ?
यस्य प्रमार्गेण वयं स्वतन्त्राः ।
विचारधृत्या स्वसमाहिताः स्म
कालः परीक्षार्थमिहाऽऽगतोऽस्ति ॥

५७

धर्मेण सन्तति र्वृद्धा नाऽपायाय प्रकल्पते ।
धर्मेण सन्ततिः शून्या नाऽपायाय प्रकल्पते ।

५८

*अधर्म सन्ततिर्वृद्धा महाऽपायाय कल्पते ।
अधर्मसन्तति र्न्यूना महाऽपायाय कल्पते ॥

५९

[1]धर्माऽपत्यं [2]धर्माऽपत्यं
कियदपि वा स्यान्नास्ति विनाशः ।
पापाऽपत्यं पापाऽपत्यं
कियदपि वा स्यादस्ति विनाशः ॥

६०

मर्यादापुरुषोत्तमो यदि वसन् गार्हस्थ्यधर्मेऽपि तु
सीतायां कति वाऽप्यपत्यमभजत् ? द्वाभ्यां न
ताभ्यां पुनः !
मर्यादापरिपालना ननु भवेत् स्वाराज्य संरक्षिणां
अस्माकं च ततोऽधिकं किमु शुभं स्वापत्यला-
भादिकम् ?

विद्युच्छक्ति-मितत्वम्

६१

विद्युच्छक्तेरभावः प्रशमयति जनान् राजसात्
सात्विके वै
द्रष्टुं योग्यं सुयोग्यं नयनबहुसुखं शान्तरूपं
हरेर्वै ।

* अधर्ममार्गेण इत्यर्थः

१ धर्मेण अपत्यम् । २ धर्माय अपत्यम्

नित्यं द्रष्टुं प्रयासादपि च यदु भवत् तादृशं
नीलरूपं,
देवे भोग्यं सुभोग्यं त्वनुभवमहितं,
मास्तु विघ्नः प्रदीपः ॥

६२

दिव्याऽऽननं राजत एव रूपं
दिव्यस्मितं भ्राजत एव तेजः ।
दिव्यः स्वरः श्रूयत एव नूनं
यन्त्राऽऽर्भटे यत् स्थगिते सतीह ॥

६३

आकाशवाणी सततं भपन्ती
जनांश्च मत्तानलसीकरोति ।
क्षणे क्षणे चापलकीलिकेयं
रसग्रहं हन्ति च कालिकेयम् ॥

६४

प्रातःकाले च सायं च निद्रापूर्वं तथैव च ।
स्वल्पकालं कीर्तनं स्याद् भक्ति शक्ति प्रचोदनम्

६५

अन्धं तमः पश्यत जीवलोकाः !
रात्रौ तदेवाऽस्ति हि नेत्रमित्रम् ।
यदि प्रदीपास्त्ववशा स्तदा तु
ननु ह्यकार्षीदपरं रविं सः ! ॥

६६

स्वभावसौन्दर्यमहो विनश्यत्
किं नाम चित्रं समभून् नृलोके ।
मितत्वमेवाऽस्तु समस्त लोक-
क्षेमंकरत्वाय नचाऽमितत्वम् ॥

६७

विज्ञानकाले, सुखनिद्रकाले
सर्वेऽपि यन्त्राः स्थगिता भवन्तु ।
यत्काल एवाऽस्ति यदर्थमेव
तत्काल एवाऽस्तु तदर्थ एव ॥

६८

जन्तवो निद्रिताः सन्ति, निद्रायै रात्रिरस्ति हि ।
रात्रिनाशं प्रकर्तुं वै कीदृशी धृष्टता नरे ! ॥

६९

यन्त्रा एव न विज्ञानं, यन्त्र विज्ञानयोर्भिदा ।
ज्ञेया, सूक्ष्मं रहस्यं तत्, सर्वं वैज्ञानिकं भवेत् ॥

७०

यन्त्राऽभावे कृतिर्यत्र तत्र माऽस्तु कदापि च ॥
नरदेहबलाऽऽढ्यत्वन्यूनीकरणकारणम् ॥

७१

कार्येषु क्रियमाणेषु नित्यं सोत्साहशक्तिकम् ।
ज्ञायते देहशक्तेश्च कियान् लाभः प्रवर्तते ! ॥

७२

देहशक्तेः प्रवृद्धिश्च समीची स्थितिरेव च ।
आलस्यात् कर्मणोऽभावात् प्रणिरुद्धा निहन्यते ॥

७३

"तन्त्रनिर्माणचातुर्यं मा भूद् देहविनाशनम्"
सुवर्णनियमोऽयं चेद् विद्युच्छक्तिमितिर्भवेत् ॥

७४

"वाणिज्यदृष्ट्वा ह्युपयोगि-सत्यता"
नत्वद्य संज्ञायत एव दोषः ।
अद्यत्वकालीनकुचक्रमाला
भ्रमस्य चैषोऽस्ति महाप्रसादः ॥

७५

सर्वशक्तिमितार्थाय सर्वशक्ति-विनम्रता ।
मानुषो भात्र एव स्याद् व्यापकः शुद्ध एव च ॥

अभाव–वैराग्यम्

७६

पत्राऽभावाल्लेखने संयमः स्यात्
तैलाऽभावाज्जागृतौ संयमः स्यात् ।
अन्नाऽभावाद् भोजने संयमः स्यान्
मौल्यौन्नत्यात् सर्वथा संयमः स्यात् ॥

७७

लेखने, जागृतौ, भोजने, न्यूनता
संस्मृतिः, स्वस्थता, सर्वसंभोजनम् ।
विस्मृती रोगः, दूरगः क्षामः
सर्वदा सर्वथा सर्वसौख्यं भवेत् ॥

७८

अभाव–वैराग्य मिहाऽस्तु का क्षतिः !
परिस्थिति मानव-सुस्थितिं प्रति ।
प्रचोदिका चेत् स हि मानवे गुणः
प्रवर्धतां सत्वपथाऽ निवार्यता

स्वातन्त्र्य-रक्षा-रहस्यम्

७९

ज्ञानविज्ञान–वैद्यानि सेनासाधनमेव च ।
न राज्य हस्ते स्यादेव, तदैव स्यात् स्वतन्त्रता ॥

८०

स्वतन्त्र ज्ञानविज्ञानं लोकक्षेमकरं भवेत् ।
न्याऽय दानं यथैवाऽस्ति तद्वत् सर्वं सुमङ्गलम् ॥

८१

अर्थवादः साम्यवादो ह्यन्ये वादादयो भुवि ।
आहत्य ज्ञानविज्ञाने लोककण्टकतां गताः

८२

विना मौल्यं ज्ञानं भवतु सफलं वृत्तसुखदं
फलं विज्ञानस्याप्यहह सुलभं सर्वनृगतम् ।
मतं गूढं न्याय्यं सकलविततं वीरकथितं
भवेद् व्याप्तं शुद्धं सकलकुशलं भेदरहितम्

८३

प्रान्तेषु सेना यदि नो भवेत् सा
देशस्य सेना जगते समर्प्या ।
जगत् समग्रां कुरुताद् व्यवस्थां
शान्तान् तटस्थानवलम्ब्य साधून् ॥

८४

"विश्वं पुष्टं ग्राम" एऽावाऽस्तु तुष्टं
ग्रामाः सर्वे स्व-स्व-पूर्णा भवेयुः,
ग्रामं ग्रामं त्वेकगेहं यथा स्यात्
तद्वत कार्यं लोभमूलानि जित्वा ॥

८५

पक्षोन्मुक्तः सर्वकारश्च भूयात
ग्रामो भूयात् सर्वकाराच्च मुक्तः ।
ग्रामो मुक्तः क्रेतृविक्रेतृ–भावात्
एतत् सर्वं ग्रामलोकैः क्रियेत ॥

८६

सज्जनशक्तिर्विद्वच्छक्तिः
वणिजां शक्तिः स्त्रीणां शक्तिः ।
शासनशक्तिः सर्वं मिलतु
पञ्चसुशक्तिभिरमृतं भवतु ॥

८७

तदैव देशेषु स्वशक्तिरिद्धा
विश्वासशक्त्या जगतीतले च ।
शान्तिः समृद्धिर्मिलिता समाना
युद्धादिभीतिर्नितरां निरस्या ।

८८

भक्तिः शक्तिविहीना हा !
शक्तिर्भक्त्या विहीनाऽस्ति ।
पङ्ग्वन्धयोर्द्वयोरस्तु
योगस्तदा जगत् स्वस्ति ॥

८९

मार्गप्रदर्शने भक्तिः शक्तिश्च पथचारणे ।
भक्ति शक्त्योर्युक्तसङ्गः चैवं स्याज्जगतीतले ॥

९०

कार्याणां योजने सम्यक् प्रेमदृष्टि रपेक्षिता ।
ततश्च शक्तिः शोभेत, नो चेत् सर्वप्रणष्टता ॥

९१

शक्तिपक्षे मनश्चाऽऽसीत् सर्वेषामधिकं यतः ।
लोक क्षोभः प्रवृत्तोऽतः भक्तिरद्य सुशोभते ॥

९२

शक्त्यपेक्षा भक्त्युपेक्षा चैवं तरतमभावः ।
भक्त्यपेक्षा शक्त्युपेक्षा माऽस्तु चैवं कदाचन ॥

९३

राज्यप्रधानविद्यैवाऽद्यास्ति सर्वत्र भूतले ।
तस्मात् सर्वेषणा चाऽस्ति शक्तिपक्षे विशेषतः ॥

९४

राज्यं युवानश्च वणिग्जनाश्च
नेतार एवं धनिनश्च सर्वे ।
अर्थस्य दास्ये निगडीकृताश्च
शक्त्याऽऽख्यदेवीं समुपासते हा !

९५

राज्यस्य हस्ते न कदाऽपि भूयात्
न्याय्यस्य दानं विनयप्रदानम् ।
स्वतन्त्र लोकस्य स्वतन्त्रसत्ता-
प्रकंटकान्युद्धर माऽस्तु तन्द्रा ॥

९६

मतप्रदानं यदि सत्यमेवं
त्वर्थस्य दास्यं न हि शोभते शम् ।
अर्थस्य दास्ये हि युनक्ति कालः
तदर्थवाञ्छा श्रमतः प्रपूर्या ॥

९७

बुद्धेः श्रमः केवलमेव माऽस्तु
सर्वेन्द्रियस्याऽपि परिश्रमोऽस्तु ।
बुद्धेः पदार्थस्य च संचयोऽस्तु
तदा नु जेय्यस्यखिलं च वस्तु ॥

९८

अर्थस्य दास्यं यदि हन्तुकामः
रौप्याऽऽर्जने मा कुरु यत्नलेशम् ।
निष्काश्रयाः कष्टपरम्परां वै
स्वातन्त्र्य-नाशं च वितन्वते हा !

९९

"दिने दिने वर्धत एव मौल्यं"
इतीरणा सत्यविदूरगा सा ।
"दिने दिने ह्रासमुपैति रौप्यं"
इत्येव चिन्ता सुगरीयसीयम् ॥

१००

भक्तौ विश्वासमान्द्यं हि सर्वत्रैव च लक्ष्यते ।
भक्तौ विश्वास सिद्धिर्हि त्वद्य तावदपेक्ष्यते ॥

१०१

ग्रामे ग्रामे भूतले विंशभागः
सर्वैर्दत्तो भूमिहीनेभ्य एव ।
चत्वारिंशो भाग एवं समस्तैः
अर्थे धान्ये दीयते सर्वदा च ॥

१०२

मासि मासि दिनैकं तु सर्वेऽपि श्रमदानिनः ।
विना मौल्यं सर्वकार्यं कुर्वते प्रेमसत्रा जनाः ॥

१०३

धनेन धनिनो येतु दानेऽपि धनिनश्च ते ।
न दानधनदारिद्र्यं स्याल्लोके द्विविधं तथा ।

१०४

ज्ञानेन धनिनो येतु तद्दाने धनिनः स्युः ।
ज्ञानदानेन वर्धेत नित्यं ज्ञानं यथा, तथा ॥

१०५

धनदाने वस्तुदाने निर्लोभा मतिरस्ति चेत् ।
सुखं हि लोके स्यादेव दानिनां च विशेषतः ॥

१०६

भूम्या च धनिनो ये तु
तद्दाने सुखिनः स्युः ।
श्रमेण धनिनो ये तु
तद्दाने मानिताः स्युः ॥

१०७

कन्या, दानेन शोभेत, सर्वं दानेन शोभते ।
दानेन गुणवृद्धिः स्याद् गणराज्यं च सिद्ध्यति

१०८

ग्रामदानं त्विदं प्रोक्तं
सुलभं सर्वतोमुखम्
तत्र ग्रामसभा भाति
सर्वेषामविरोधिनी ॥

१०९

क्रयादिऋणपाशैश्च निबद्धेयं च मेदिनी ।
ग्रामदानेन मुक्ताऽभूत् स्थिरा सा विष्णुवल्लभा

११०

नारायणो नाम समाज एव
सर्वेष्टमेवानुसरन्ति सर्वे ।
मा भूत् कदाचिद् "बहुनायकत्वं"
सर्वानुमत्या "सकलाऽऽयनत्वम्" ॥

१११

स्वातन्त्र्य-रक्षाकवचं त्विदं तु
तथैव सर्वैरनु मोदितं तु ।
"येल्वाल्" सभायां सकलैश्च राष्ट्र-
प्रधानपक्षैर्जगतले च ॥

११२

ग्रामस्य दानं बहुमण्डलेऽभूत्
प्रान्त्य-प्रदानं मिथिलासु भूतम् ।
ओढ्रप्रदेशे द्रविडप्रदेशे
राष्ट्रे महत्येवमहो बहुत्र ॥

११३

देश प्ररक्षास्ववतार रूपतः
ग्रामप्रदानाऽऽख्य बहूत्तमत्वतः ।
देशस्य रक्षा कृतिरूपतामनेत्
सिद्धं प्रजास्वानुभवानुशासनम् ॥

११४

विद्यारक्षण कार्याणि जनानां वृत्तिभद्रता ।
महागृहस्थसौभाग्यं ग्रामदानेन सिद्ध्यति ॥

११५

प्रजागृतं स्यात् परिवारिताबलम्
तथा स्वयं ग्रामबलं मद्बलम् ।
न केवलं राज्यविधानिका बलं
न केवलं सैन्य सुसज्जता बलम् ॥

११६

यावद् विश्वं प्रकुरुते विधानसंभया विधीन् ।
यावच्च सेनाऽऽरक्षा च तावत् सर्वं प्रभञ्जकम्

११७

शक्तिः प्रभञ्जनी माऽस्तु शक्तिः स्यात् सर्व-
योगिनो ।
ग्रामदानेन सिध्येत क्रियायां सैव च स्वतः ॥

११८

*"रक्षेयं तान्त्रीका" तस्माद् रक्षामन्त्रस्तु "जै
जगत्"
तन्त्र मन्त्र प्रसिद्धौ तु रक्षा सर्वस्य सिद्ध्यति ॥

११९

समेषां जनानां सुहृत् सौमनस्यं
यदेवाऽभिवृद्धं तदेवाऽद्य यस्य ।
गुरुत्वं रथस्य कथं वा गतं हा ?
सुहृत्वं प्रमूलं महत्यैक्यरस्ये ॥

* Gramdan is defence measure

१२०

यदि सर्वोदयो भावः किं वाऽसाध्यं महीतले ।
कर्तव्ये चाऽऽदरे चैवं वर्धतां सर्वमानसम् ॥

१२१

सत्यप्रेमणी द्वे एते
ससरसभूते स्यातां यदि ते ।
कलहं प्रेम्णा कुटिलं साम्ना,
सर्वं जयसि सर्वं जयसि ॥

१२२

*के वा कलहं वांछन्ति के वा कुटिलं वाञ्छन्ति ?
कलहे कुटिले वाञ्छा या प्रेमाऽऽराधन वाञ्छा सा

१२३

केवा कलहं वाञ्छन्ति ! के वा कुटिलं वाछन्ति ।
कलहे कुटिले वाञ्छा या सत्याऽऽराधन वाञ्छा सा

१२४

तथा च ग्रामदानेन समयोद्बुद्ध शक्तिना ॥
दानगङ्गाप्रवाहेण लोकमानसजन्मना ॥

१२५

उत्पत्स्यमाना जनशक्तिधारा;–
परस्परं द्वेषविजालमाला ।
तनूभवत्येव, न कारणं यत्
स्वातन्त्र्यरक्षाकवचं च सुस्थम् ॥

१२६

धृत्वेदं कवचं विश्वे ये तु कार्याणि तन्वते ।
स्वातन्त्र्यस्य रहस्यं ते प्रस्फुटं किल मन्वते ॥

१२७

समाजपरिवर्तनं शासनं च
मनःस्थितिः समीचीना
पालनीया मनीषिभिः ।
परिस्थितिः समुन्नेया
लोकसङ्ग्रहकांक्षिभिः ॥

१२८

मनःस्थितिर्दृढा चेत्तु केषां चिदपि सत्पथे ।
परिस्थितिः समाजस्य परीवर्तमवाप्नुयात् ॥

१२९

निष्ठा तु सर्वदा ग्राह्या, न त्याज्या पापभूयसा ।
प्रदीपे ज्वलमाने तु नैवाऽस्ति तमसः स्थितिः ॥

१३०

गुणानां संवृद्धि र्भवतु सततं निर्मलधियां
असीमा सा चैवं यदि भवति लोकोत्तरदशाम्
तदा लोकाः सर्वे तदनु-गुणतां यान्ति सुलभां
न चाऽस्त्येवं लोके किमपि तदु यन्नैति शुभ-
ताम् ।

१३१

लक्षाधिकासु पल्लीपु विंशो भागो धराधिपैः ।
चत्वारिंशश्च दत्तो हि धनधान्य-श्रमेष्वपि ॥

१३२

समाज-परिवृत्तिस्तु शीघ्रमेवाऽभिवर्धते ।
गुणप्रकाशनं स्याच्चेत् पत्रिकासु दिनेदिने ॥

१३३

केवलं राजकीयानां शासनैर्नालमेवहि ।
समाज-परिवृत्तौ स्याल्लोकानां हृदयं शुभम् ॥

१३४

तथाऽपि शासनै र्भाव्यं जनहृत्परिवर्तने ।
अवकाश-प्रदानं तद् यथा स्यान्न भयं क्वचित् ॥

१३५

इदानीं भूमितेऽज्ञा
या भूमि र्दीयते मुदा ।
भूमिदाने ग्रामदाने,
तदन्यां भूमिमुद्दिशेत् ॥

---

* उभयत्र काकुस्वरभेदेन अन्वय व्यतिरेकाभ्यां भावः ग्राह्यः

१३६

तादृशां नैव देयं हि
परिहार-धनादिकम् ।
स्वयं दानेन सिद्ध्यन्ति
सर्वोदर्काः शुभाऽऽवहाः ॥

१३७

स्वयं दानावकाशेन
रक्षितं स्याज्जनाऽऽधृतम् ॥
राज्यपद्धति चक्रं च,
समाज-परिवर्तनम् ॥

१३८

हार्दिकी परिवृत्तिस्तु
सद्भिरेव भवेद् ध्रुवम् ।
तस्योपयोग चातुर्यं
शासनेन भवेत् ततः ॥

देशरक्षणम् ? देशस्वातन्त्र्यं किम् ?

१३९

एकस्तन्तुः किं करोतीति सत्यं ?
एको विन्दुः किं करोतीति सत्यम् ?
एकश्चाऽणुः किं करोतीति सत्यं ?
एकं पुष्पं किं करोतीति सत्यम् ?॥

१४०

एकं तन्तुं त्वेकविन्दुं विहायाऽ
प्येकं चाऽणुं त्वेकपुष्पं विहाय ।
वस्त्रं, सिन्धुर, वस्तु माला न शक्याः
व्यष्टिः सृष्टौ सार्थतामेति भद्र ।

१४१

एकोऽहं वा किं करोमीति तथ्यं ?
एकैकोऽहं भूपयामीह मर्त्यम् ।
एको ग्रामः किं करोतीति हासः !
एकश्चैको ग्राम एवाऽस्ति देशः ॥

१४२

ग्रामे ग्रामे भद्रता नाऽस्ति चेत्तु
देशे देशे भद्रता स्यात् कथं तु ! ।
ग्रामे ग्रामे प्रेमलं मानसं चेत्
देशस्यार्थे सैव रक्षा सदाऽभूत् ॥

१४३

ग्रामे ग्रामे पारतन्त्र्यं यदाऽस्ति
अन्ने चाऽर्थे कर्मयोगे त्वरोगे ।
रक्षाकार्ये संस्कृतौ न्यायकार्ये
देशः स्याद् वा वक्तुमेवं "स्वतन्त्रः" ?

१४४

देशस्य रक्षा नहि "डिल्लिकातः ।
डिल्याश्च रक्षा ननु पल्लिकातः ।
व्यकेश्च शक्तेर्यदि भूमिका स्यात्
समष्टि-रक्षाऽपि तदैव भूयात् ॥

१४५

ग्रामस्य शक्तिर्विविधाऽभिवर्धतां
ग्रामस्य भक्तिः सकलाऽभिवर्धताम् ।
निर्माण-वाणिज्य-नयाऽधिकारिता
विद्याऽभिरक्षा, शुचिता, प्यरोगता ॥

१४६

न पक्षगाः पान्ति जनान् स्वदेशान्
विपक्षगा नैव जनान् स्वदेशान् ।
कावाऽस्ति पक्षप्रविपक्षनीतिः ?
'स्वहस्तगः स्यादधिकार पूर्तिः' !

१४७

"ततस्तु देशस्य जनस्य रक्षां
पक्षप्रकारेण वयं हि कुर्मः ।

अन्ये तु पक्षाः प्रविधातुकाश्च "
निर्देशमात्रे चतराक्षकाश्च ॥

१४८
इदं च सर्वत्र विशालविश्वे
शतत्रये चाऽपि च राज्यदेशे ।
जनान् जनान् योजयतीह यो वै
स शक्तिमान् लोकसुरक्षणे स्यात्

१४९
सुरक्षणं साङ्कुश-राज्य कार्य
स्व-रक्षणं लोक-स्वराज्य-कार्यम् ।
इदं प्रसूक्ष्मं जनताभिरेव
ज्ञेयं तदर्थं यतनीयमेव ॥

१५०
स्वतन्त्रदेशस्य परावलम्बी
न शोभते ग्रामसमूह एवम् ।
ग्रामैकमत्यं सहसम्विभागः
यदा, तदा देश-स्वतन्त्रता सा ॥

जात्यतीतम्

१५१
व्यावर्तनं तु या कुर्यान् मानवे मानवेऽपि च ।
आत्मसाम्यं च या हन्ति सा जातिर्दोषभाग-
भूत् ॥

१५२
दण्डनीयाः समस्ताश्च जातिश्चेत् पृच्छयते तदा ॥
देवाऽऽगारा यथा चैत्र मठाद्याः सर्व एव च ॥

१५३
विद्याशाला दण्डनीयाः जातिश्चेत् पृच्छयते तदा ।
न्यायालया दण्डनीयाः जातिश्चेत् पृच्छयते तदा ॥

१५४
जनानां गणना चैव जतिश्चेत् पृच्छयते तदा
वैद्याऽऽगारा दण्डनीयाः जातिश्चेत् पृच्छयते
तदा ॥

१५५
सन्तान रोधकाः सर्वे जातिश्चेत् पृच्छयते तदा ।
मताऽऽदाता दण्डनीयः जातिश्चेत् पृच्छयते
तदा ।

१५६
खाद्याऽऽगारा दण्डनीयाः जातिश्चेत् पृच्छयते
तदा ।
छात्राऽऽवासा दण्डनीयाः जातिश्चेत् पृच्छयते
तदा ॥

१५७
छात्रवृत्ति प्रदातारः जातिश्चेत् पृच्छयते तदा ।
सेनाशाखा दण्डनीया जातिश्चेत् पृच्छयते तदा ॥

१५८
सर्वकारा विशेषेण जातिश्चेत् पृच्छयते तदा ।
आरक्षका दण्डनीया जातिश्चेत् पृच्छयते तदा ॥
ग्रन्था नूत्ना दण्डनीयाः जातिश्चेन् मुद्र्यते तदा ।
कथाकाराः पत्रकाराः जातिश्चेन् मुद्र्यते तदा ॥

१५९
चित्रकारा दण्डनीयाः जातिश्चेद् दर्श्यते तदा ॥
सर्वाः संस्थाः दण्डनीयाः जातिश्चेत् पृच्छयते
तदा ॥

१६०
जात्यतीतं भवेद् विश्वं समग्रं, शोभनं तदा ।
खण्डखण्डविधानेन न स्यात्तु शतधाऽपि च ॥

१६१
जाति-वर्णादि-धर्मास्तु न त्याज्या लोकधारकाः ।
सर्वोद्योगे समं मौल्यं भावना साम्यमेधताम् ॥

१६२
मानवी जातिरित्येव प्रब्रूयुः सर्व एव हि ।
तादृशो मानसः पाकः वर्धतामभिवर्धताम् ॥

१६३

पुरा तु सैव जातिर्हि तांस्तान् तत्तत् प्रमाणतः ।
समीचकार, सत्यं तत् समानगुणकर्मतः ॥

१६४

इदानीं तेन रूपेण जातिर्न स्याद् विभागिनी ।
सर्वत्र सर्वमेवाऽस्ति गौणमुख्यविभागतः ॥

१६५

आसीद् दूरं तथा चैवं यानादि-व्यतिरेकतः ।
इदानीं नैव दूरं तु जगदेव गृहायते ॥

१६६

आसीददर्शनं पूर्वं एवं चाऽऽसीदभाषणम् ।
कालस्तु पूर्वदीर्घः सः इदानीं कललाधवम् ॥

१६७

समानकुलधर्माश्च नियता नैव पूर्ववत् ।
सर्वदेशनिवासाय यान्ति निर्यान्ति मानवाः ॥

१६८

वृत्तेः सुभद्रता चाऽऽसीद् वृत्तिवृत्ति-प्रभेदतः ।
जातिभेदो वृत्तिभेदः तावन्मात्रं प्रगृह्यताम् ॥

१६९

आहारशुद्धिः स्यादेव नाऽन्यथा जातिनाशनम् ।
मांसमद्याशिने पुंसे कथं देयात् स्वकन्यकाम् ? ॥

१७०

सत्याऽऽहारो वैष्णवो वा जैनो वाऽपि त्वहिंसकः ।
जात्यतीतत्वसिद्ध्यर्थं अनिवार्यं -निरामिषम् ॥

१७१

धूम्रपानविदूरत्वं सत्याऽसत्यविवेचनम्
हिंसाऽहिंसाविवेकश्च शुचिताऽध्यात्ममेव च ॥

१७२

एतानि सात्म्यतां यान्तु यथा चैव समाजके ।
तथैवान्दोलनं स्याच्चेज् जात्यतीतं सुखाऽऽवहम् ॥

१७३

बहुसम्मतिरीत्या च पक्षराज्यविसर्जनम् ।
सर्वसम्मतिरीत्या च ग्रामराज्यसमर्थनम् ॥

१७४

जात्यतीतत्व सिद्ध्यर्थं सिद्धौषधमिदं श्रुणु ।
पवित्राऽऽश्रम-संस्थानां व्यापनं, जातिमारणम् ॥

१७५

'शरीरसंस्था जातिश्च नाऽतिरिक्ता भवेत्ततः' ।
शास्त्रपूतमिदं वाक्यं सदाऽऽचार्यं सुसम्मतम् ।

एकं कुलं वयम्

१७६

चलत्प्ररूढ्यां रूचिरस्तु नो मे
'त्वयं हि भक्तो गुरुमार्गगामी ।
अयं न भक्तो न च सम्प्रदायी'
चेत्यादि भाषा ननु शोभते किम् ? ॥

१७७

यथा ब्रह्म परिच्छिन्नं न भवत्येवमेव हा ।
ज्ञानभक्तिपरिच्छेदः जीवेऽपि न भवत्यहो ।

१७८

मानवे मानवे त्वद्य:धर्मभेदकृता भिदा ।
नैव तिष्ठेन्न साध्वी च तस्मादेकं कुलं वयम् ।

१७९

भिन्नभिन्न-मतसंस्कृतेः शुभां
भावनां नमत मूलगामिनीम् ।
साध्यधर्म-परिकल्पितेषु वै
नाऽपि भूषणपरा न दूषकाः ॥

१८०

अन्तर्विवेकस्तु सुरक्षणीयः
विवेकदार्ढेचन निराऽऽग्रहेण ।
परे च सर्वे न कदाऽपि नीचाः
नाऽहं च नीचः, समता हि भक्तिः ॥

१८१
भक्तिसूत्रकलिता वयं नराः
सर्वसद्भिरहहा पुरातनैः।
विज्ञवीर-मुदिताऽधुनातनैः;
एक एव पतिरस्ति नः पिता ॥
१८२
दृश्यं नैतद् बाह्यतस्त्वेतदेवं,
दृश्यं सूत्रं किं भवेन् मालिकायाम् ?
तत्तच्चर्माऽप्यस्ति भिन्न-स्ववर्णं
गोभिः क्षीरं दुह्यते त्वेकवर्णम् ॥

राज्यं नाम महाव्याधिः

१८३
"राज्यं नाम महाव्याधिः अचिकित्स्यो विनाशनः
भ्रातरं वा सुतं वाऽपि त्यजन्ति खलु भूमिपाः"
१८४
आर्षं चेदं वचनं मिथ्यां
कर्तुं येत्विह सिद्धाः सन्ति।
शुभ्रान् धीरान् प्रणमामि मुदा
कालकलींस्तान् कलयामि ॥
१८५
सत् क्षत्रियं त्वद्य तनोति विश्वं
अग्रे त्वसत्-क्षत्रियमातनोति।
विनोद भावेन "विनोब बावः"
शान्तः प्रशान्तः परशुः स रामः ॥
१८६
राज्यशास्त्रविधानेऽपि
वर्णितं राज्यमुत्तमम्।
दिने दिने राज्यभारः
यत्र स्यान् न्यून एव च ॥
१८७
निन्दाऽसूये पक्षराज्यस्य नीती
त्वन्तःप्रोते, नाऽस्ति दोषोऽपि कस्य।
निन्दाऽसूये ये त्वतीत्याऽपि सन्ति
तानप्यन्तः पातयेत् सा व्यवस्था ॥
१८८
राज्यस्य पीठं शुभमोहनं तत्
तपस्विता तेन विलोपमेयात्।
राजर्षितुल्याः कति वाऽत्र सन्तु
राज्यव्यवस्थैव विनाशहेतुः
१८९
प्रजाधर्मस्तथा पक्षः
राज्ञ एव नचेष्टता।
तदभावाद् विपद्धर्मः
राजधर्मस्वरूपतः।
१९०
व्यवस्था सा तथा स्याच्चेत्, राज्यं भवति मङ्गलम्।
लोभाऽसूये पदव्यर्थे नावकाशे कदाचित् ॥
१९१
तदर्थं सर्वसम्मतया निर्वाच्याः शासकाः शुभाः।
बहल्पमतपद्धत्या नीचानामपि योग्यता ! ॥
१९२
राज्यप्रलुब्धस्त्वमरो बुभूषुः-
स्थिरं स्वपट्टं ह्यभिकामयेत।
तदर्थमेवाऽभिवर्धते जने
ह्यसूयिता स्पर्धिमनोविभूमिः ॥
१९३
अद्यापि लोकप्रभुता हि चैषा
त्वर्थस्य दास्यं शिथिलीप्रकर्तुम्।
नैवाऽस्ति शक्ता, कथमार्जयेत् तां ?
विचिन्तनीयं सकलैश्च लोके ॥

१९४
स्पर्धामनो भिन्नविभिन्नरूपं
वर्धेत नित्यं नवनूतनं हि ।
दोषस्य नाशाय यदाऽऽदरः स्यात्
स सत्पथः स्यात् सकलोर्जितश्च ॥

१९५
हस्तान्तरं केवलमप्रशस्तं
राज्यस्य शक्तेरथवा धनस्य ।
मूलं निकृन्तव्यमये स्मरध्वं
क्रान्तिश्च सैषा न हि राज्यगैषा ।

१९६
विश्वस्य राज्यव्यवसाय एव
शक्तिक्षयो भाति यथास्थितिश्च ।
तदर्थमेवाऽसकृत् स्वकीर्तिः
जनाऽभियाच्ञा सहकारितार्था ॥

१९७
शक्तिक्षयो नाऽस्ति यदीह सत्यं
देशाऽवनं सम्यगहोऽभविष्यत् ।
परस्परं चोन्नतपीठलोभात्
त एव नित्यं कलहायमानाः ॥

१९८
पक्षात् पक्षं धावमानत्वमेतत्
शिक्षार्हं स्यादेवमेवैव धर्मात् ।
धर्मं भिन्नं गन्तुकामत्वमेतत् ;
"सर्वे पक्षाः सर्वधर्माः समानाः' ॥

१९९
राज्येऽपि तत् स्यात् सकलं मतं च
समानमेवं यदि सत्यमिष्टम् ।
सर्वानुमत्यैव जनाधिपत्यं
त्वनन्यास्यमेतद् बहुनायकत्वम् ॥

२००
तदा मतस्येयमहो प्रभिक्षा
राष्ट्राधिपत्यार्थमपीह नश्या ।
तथैव लोकस्य सभार्थमेवं
राज्यस्य वैधानसभार्थभिक्षा ॥

२०१
औन्नत्यमेवैव समप्रजात्वं
पुनश्च भिक्षाटनपट्टता हा !
एवं विरोधः परिहार्य एव,
न स्यान् मतस्याऽभियाचनाऽशुभा ॥

२०२
यदिदं क्रियते राज्यं
बह्वल्प-मत मूलकम् ।
प्रजा-साम्यं विनष्टं च,
विपदां तु परम्परा ॥

२०३
ये ये लोकाः समाहूताः विवाहादि-शुभेषु वै ।
ते ते सर्वे हि सत्कार्याः, तद्वत् सर्वं शुभं मतम् ॥

२०४
इदानीं, गणना पश्चाद् बहूनां विजयो ध्रुवः ।
अल्पं मतं तिरस्कार्यं, एवमस्ति, विचिन्त्यताम् ॥

२०५
"एकाऽयना" पद्धतिराद्यभूता
"त्वल्पायना" रीतिरथाऽऽबभूव ।
क्रमेण "बह्वायतना" च रीतिः
सर्वत्र नाट्यं कुरुतेऽद्य भीतिः ॥

२०६
तदर्थमेवाऽस्तु विशुद्धनीतिः
लोकव्यवस्था "सकलाऽऽयता"या ।
अपूर्वगाऽस्माभिरतो हि साध्या
नव्या च मानुष्यपुमर्थता सा ॥

२०७

"न तत्र राजा राजेन्द्र
न दंडचा न च दंडिनः ॥
स्वधर्मेणैव धर्मज्ञाः
ते रक्षन्ति परस्परम्" ॥

२०८

इयं स्थिति र्यथाशीघ्रं स्थापनीया मनीषिभिः।
राज्यतन्त्रस्य चरमं फलमप्येतमेव हि ॥

क्रान्तिः का ? कथम् ?

२०९

क्रान्तिर्न हिंसा न च रक्तपातः
न वा प्रधूर्तस्य विवृत्तमाया।
न वा प्रलोभः निजराज्यवित्ते
क्रान्तिर्मनीषा गहनाऽऽत्मचिन्ता ॥

२१०

स्थितां स्थितिं नैव सहेत क्रान्तिः
मनःस्थितिं नैव सहेत क्रान्तिः।
परिस्थितिं नैव सहेत क्रान्तिः ॥
याऽऽत्मस्थितिं वाञ्छति सैव क्रान्तिः

२११

अशुचेर्मुक्ता ह्यनृतान्मुक्ता
तमसोन्मुक्ता पापोन्मुक्ता।
शुचिता, सत्यं, मतिरातृष्णा,
जीवन-शुद्धिः सहजा क्रान्तिः ॥

२१२

प्रेमनिरर्गळधारा क्रान्तिः
सर्वसुखार्था जननी श्रान्तिः।
स्वार्थे निरर्था परसंक्रान्तिः
परमैकान्ता परमोत्क्रान्तिः ॥

२१३

परिस्थितौ मानव-जीवनस्य
परस्पर-स्नेह-सहानुभूतिः।
सत्याऽऽभिमुख्यं दृढसन्मतिश्च
क्रान्तेः स्वचिह्नं परदुःखसाह्यम्

२१४

क्रान्त्यप्रियाः प्राय इहैव ये तु
बद्धां दशामेव हि कामयन्ते।
क्रान्तिप्रियास्ते हि भवन्ति सन्तः
मुमुक्षवो ये भवबन्धपाशात् ॥

२१५

"क्रान्तिर्मुमुक्षा" समभावबोधा
नूत्ना, पुराणी, प्रथमा, द्वितीया।
यथास्थितौ दोषपरम्परां यः
छेत्तुं व्यवस्येत, स एव धीरः ॥

२१६

परां सुभक्तिं जनतासमाजे
यत्तु प्रहन्तीह तदुज्झ्यतां भोः।
परस्पर स्नेहन-कार्यमेव
क्रान्त्या भवेत् तेन हि भक्तिनिष्ठा ॥

२१७

क्रान्त्यर्थ मागच्छत सर्व एव
यूयं हि भक्ताः परमप्रपन्नाः।
"द्वयार्थनिष्ठां" पथसिद्धिशुद्धां
वृद्धां कुरुध्वं परमं भजध्वम् ॥

२१८

विद्या विद्यार्थमेवाऽस्त्वविरत सुमनो हृद्यतामेति
या तु
सौख्यार्था चेति भासो नहि भवति कदाप्य-
द्यमाने सुखे सा।

देवो देवार्थमेवेत्यनुपधि मननं सुष्ठु भति
प्रपत्तिः
तत्वं चेदं तु नान्यन् ननु भवति वृथा मोहवादो
जनानाम् ॥

२१९

अन्यार्थं यो ह्युपायः स च भवति सदा त्याज्य
एवैव सिद्धौ
क्षुद्रार्था देवभक्तिः खलु फलविरहे त्यज्यते
काम्यभक्तैः
किं तेनाऽस्ति प्रणाशो दिवि भुवि भवतां देव-
सर्वस्वभाजां
यस्मात् स्वस्यैव लाभो भवति हि नियतोऽका-
मकामस्य चैव ॥

२२०

एवं वेदादि विद्या खिलमधिगता चेत्येप योऽ-
स्ति प्रवादः
लोकानुद्दिश्य यान् वै "ललितसुरभिता त्य-
ज्यते भुज्यतेऽन्या" ।
तेषामेतन्न दोषो बहुगुणवितथा याऽर्थवादे
मनीषा
तस्या एव प्रभावः, गतमनुगतिकं त्वल्पदं दुष्ट-
चक्रम् ॥

२२१

देवस्थाने प्रपूजाऽथ भवति विरसा
देववाणी प्रहीणा
ग्रामे ग्रामे च वृत्तिः प्रखिलमभजते-
त्येव यत्तु प्रदृश्यम् ।
सर्वं याथार्थ्यदूरं, तदपि च श्रणुत क्रान्तिगं
कारणं किं ?
सूक्ष्मेक्षायां तु दृष्टा "प्रविहत जनतासार्वभौम-
स्वशक्तिः" ॥

२२२

एतच्छक्तेश्च लाभे यदि भवति मनीषा, श्रूयतां
क्रान्तिकारिन्
विद्या प्रोता सदा नः कृतिसरसशुभा चाऽन्न-
वस्त्रादि कार्यैः ।
अद्यैषा नाऽस्ति विद्या, न भवति कदाऽपि ज्ञान-
कर्म-पृथक्त्वं
कृष्यादिष्वेव भावो भवतु मतिमतां ग्रामवासे
मनोज्ञे ॥

२२३

कृष्यां ह्यस्ति ऋषिश्चाऽपि ऋषिणा कृषिरेव च
उपादेयस्तदेवाऽस्ति जगते स्वस्ति सर्वथा ॥

२२४

अर्थादौ वृद्धिकामाः यदि यतनपराः सज्जना-
स्तद् वृथैव
सद्विद्या नैव वृद्धा न परत इह वा येऽर्थलोभे
प्रमुग्धाः ।
अन्ते तैरेव लोकैर्लयमधिगमिता सर्वविद्या
भवित्री
क्रान्तिश्चैवं प्रमर्द्या, स्वगहन गहना, चिन्त्यतां
दूरदृष्ट्या ॥

२२५

सर्वोदये दृष्टिरिहाऽस्ति नो चेत्
यस्याऽपि कस्याऽपि न चाऽर्थसिद्धिः ।
भ्रान्तिप्रणष्टं जगदेव सर्वं
क्रान्तिप्रबुद्धं जगदेव भद्रम् ॥

२२६

अर्थस्य धर्मो विषमः स जातः
यस्मिन् निजोत्पादक एव नित्यम् ।
अधो भवत्येव, परन्तु सद्यः
उपर्युपर्यैधत मध्यवर्ती ॥

२२७

वाणिज्यं तत एव सर्वरुचिरं, सर्वैश्च शीघ्रं ह्यहो
बाहुल्येन धनार्जनं क्रियत इत्येतेन सर्वोऽऽ
पदः ।
माहार्घ्यं सकलेषु वस्तुषु सदा वर्धेत वर्धेत वै
सेयं पद्धतिरेव मूलत अये संछिद्यतां क्रान्तिगैः ।

२२८

"मध्यवर्ति लोकतो नाऽहमहह भागवान्"
एवमेव छलमिदं जनसुमानसे यदि ।
पूर्वमित्र च राज्यगेष्वाङ्लमध्यवर्तिता
शान्तितो बहिष्कृता, तद्धदद्य मङ्गलम् ॥

२२९

आगता स्वतन्त्रता चेतिभासमानता,
ह्यर्धभागकुशलता दर्शिता महत्तरा ।
अर्धभाग अस्तिभो ! पूर्णसाधनीयता
महत्तमा स्वराज्यगा पूर्णक्रान्ति कारिता ॥

२३०

अन्यदेशगाः समे ये स्वतन्त्रतां गताः
वन्यजीवनादहो रम्यजीवनं गताः ।
भारतस्य मार्गतो विश्वभद्रशालिना
बुद्धिमत्सु जागृता सेयमस्त्यपूर्वता ॥

२३१

बुभुक्षुभिर्यथाकिल खाद्यलाभतः स्पृहा
समिध्यते, तथैव हा राज्यगाऽद्य हि स्पृहा ।
नांऽङ्गल-राज-निन्दका यथा तदाऽभवाम हा
स्वीयनिन्दकास्तथा मा कदाऽपि भूम हा ॥

२३२

राज्यतन्त्रपारतन्त्र्यदूरता ह्यभूदिव
पारतन्त्र्यबहुलता सूक्ष्मदर्शनादिह ।
आर्थिकाऽऽत्मबन्धनच्छेदनेऽपि कुशलता
स्वीयलोकहृदयतः स्यात्तु क्रान्तिशालिता ॥

२३३

इयं तु क्रान्तिरेव हि मुख्यतोऽभिवर्धताम्
पक्षराज्यसंभ्रमो बुद्धिमत्सु वर्ज्यताम् ।
सर्वलोकसंङ्ग्रहाद् ग्रामक्रान्तिरेधताम्
हसन्मुखेषु सर्वतो हार्दता विजृम्भताम् ॥

२३४

लोकतन्त्रमूलता सीमिता न चास्ति हा !
मतप्रदानमात्रतो नास्ति लोकतन्त्रता ।
ग्रामतन्त्रभागिता ग्रामवासि-साध्यता
लोकतन्त्रक्रान्तिदा समुत्प्रणीयतां सदा ।

२३५

"प्रातिनिध्यराज्यतः पुनः पुनः समागता
लोकतन्त्रह्रासिता," चानुभूतपूर्वया ।
धिया हृदा विचिन्त्य "संपूर्णक्रान्ति" रागता
विधायिता स्वकाऽऽश्रिता स्वयोजनाऽभिमुख्यता

२३६

मंडले मंडले चैव स्थीयतां सत्वशालिभिः ।
विधायकानि कार्याणि क्रियन्तां सर्वसम्मतैः ॥

२३७

रचनात्मककार्याणि सिद्धानि तु यदा तदा ।
सर्वविश्वासशक्त्या च वर्धते क्रान्तिकारिता ।

२३८

नारदतुल्याश्चरन्तु लोकं
मैत्री-दृष्ट्या दिशन्तु पाकम् ।
मानसमेवं हार्दिकमेवं
क्रान्तेः कार्यं नेतः सौम्यम् ॥

इति तिरुनारायणपुरम् अैयर् दासस्य कृतिषु
स्वानुभूतित्रिवेणी नामक जीवनोज्जीवन काव्ये
विचारगङ्गा नामके द्वितीयसर्गे
उत्तरार्धम्

अथ स्वानुभूतित्रिवेणी नामक जीवनोज्जीवनकाव्ये

## भक्तिसरस्वती-नामकः तृतीयः सर्गः

१

आचारयोगाच्च विचारयोग-
रूपो बभौ यः किल बुद्धियोगः ।
एवं ह्युभाभ्यां परिकर्मिता या
भक्तिश्च साऽग्रे परिपाकमेयात् ॥

रामायण दर्शनम्

२

रामायणादौ परिदृश्यमान
प्रश्नावमर्शेन तु सिद्ध्यतीदम् ।
"तत्कालतल्लोकविलक्षणा ये
गेयास्त एव ह्यनुवर्तनीयाः ॥

३

गुणाश्च वीर्याणि समन्वितानि
यत्राऽऽसते, ते हि सुकीर्तनीयाः ।
ये वा प्रपन्नान् न हि सन्त्यजन्ति,
वध्यांश्च शत्रून् परिपालयन्ति ॥

४

समस्तदोषं परनिष्ठितं ये
स्वनिष्ठमेवेति सदा विदन्ति ।
दुःखेषु सत्स्वेव मृषा न चाऽस्ति
येषां प्रतिज्ञा सुदृढा चकास्ति ॥

५

कुलस्थ-धर्मस्य विवञ्चनं न,
सर्वोदये सर्वहिते च नित्यम् ।
प्रियत्वयोगेन समेषु साम्यं,
शास्त्रेषु सामर्थ्यमुधैर्यसख्यम् ॥

६

कोपं सहन्ते रविचन्द्रदेहाः
कोपाच्च येषां सकलाः प्रभीताः ।
द्युतिर्धृतिर्बुद्धिरहो सुनीतिः
यत्रैव तिष्ठन्ति सुवाग्मिता च" ॥

७

तथाऽपि लोकः स्वदतेऽति भक्त्या
प्राच्ये पुराणे श्रवणाय चैव ।
एषा तु भक्तिः प्रथमा स्मृता सा,
तत्कालभक्तिर्हि विशेषवीर्या ॥

८

ततो हि मे रोचत एव तत्त्वं
"रामायणस्थं" प्रगतेः स्वसत्वम् ।
न केवलं ध्यानविमर्शनाय
समाजगत्यां "बलदाः" स रामः ॥

९

एवं विचारे सति साधुभूते,
तत्कालभूतिः सुविवेचनीया ।
"गान्धीविनोबादि" विभूतिमाला
मन्त्र-प्रकारादनुचिन्तनीया ॥

१०

कर्तव्यतां यान्ति य एव चाऽर्थाः
तेषां प्रकाशाय किलाऽस्ति मन्त्रः ।
लोकैरनुष्ठेयविधौ प्रकाशः
याभ्यां प्रसृष्टो जगतीतलेऽद्य ॥

११

व्यक्तेरिदं नाऽस्ति तु पूजनं तत्
य एव विघ्ना ह्यधुनातनास्तु ।
तेषां समुत्पाटनशक्तिरेव
चाऽस्माभिरद्यैव नु साधनीया ?

१२

नवो नवो जायत एव देवः
नवो नवो भासत एष देवः ।
स एव भूतः स च भव्य एव
स एव विद्येत च वर्तमाने ॥

१३

युगस्य कार्यं प्रविचिन्त्य तत्तत्
युगस्य निर्माणमये यथा स्यात् ।
तथा च देवः कमपि प्रवेश्य
स्वकीयलीलां तनुते मुहुश्च ॥

१४

यथैव रामस्य वनेचरास्ते
यथैव कृष्णस्य च गोपबालाः ।
तथैव तत्काल-शुभक्रियासु
प्रभागिनः स्याम वयं सुभक्ताः ॥

१५

"अर्थस्य दास्यं, बहुराज्य-दास्यं,
मनो-विदास्यं, जडदेह-दास्यम् ।
सङ्घस्य दास्यं" ह्यधुनातनेषु
विघ्नेषु मुख्यानि विचिन्तितानि ॥

१६

देहे विशुद्धे तु निसर्गवृत्त्या,
विचारशुद्धया च मनः प्रशुद्धम् ।
द्वयं क्रमेण प्रविशुद्ध्यते चेन्
न चौषधं ग्राह्यमथो न दण्डः ॥

१७

उत्पाद्यते यैः स्वयमेव वस्तु
ह्यर्थस्य दास्यं जितमेव तैस्तु ।
सङ्घस्य दास्यं च निरस्तमस्तु
विजित्य संख्याऽसुर-मायि-वस्तु ॥

१८

राज्यस्य दास्यं हि निकृन्तनीयं
स्वयं व्यवस्था-बल रूप खड्गात् ।
एवं विचारश्च तदाऽऽनुरूप्या-
दाचार- सम्पत्तिरपेक्ष्यते च ॥

१९

इदं हि रामायणमद्य तावत्
प्रदर्शनीयं धृतिपूर्वकं वै ।
पुरातनं प्रेरकमस्ति सत्यं,
स्वकारकं त्वद्यतनं सुभद्रम् ॥

२०

श्रव्या हि भक्तिर्यदु रोचते जने
दृश्याऽपि भक्तिस्तदपेक्षया भृशम् ।
वक्तव्यभक्तिः सुतरां हि रोचते
कार्या स्वभक्तिर्भवबन्ध-मोचिनी !

२१

भक्तेश्च मार्गे श्रवणं कथा च
विशिष्टतां याति, तथाऽपि नालम् ।
एतद् द्वयं श्लाघ्यतमं तु श्रद्धा-
विधाविशेषाऽन्वयिनां जनानाम् ॥

२२

कर्णस्य दाने रसना-प्रदानेऽ
प्यनिच्छमालोक्य विचित्रलोकम् ।
भक्तेश्च सौलभ्यमिदं कदाऽऽपि
नाऽस्माभिरत्युक्तितया विभाव्यम् ॥

८

२३
तथैव न स्यात् तदपक्रिया वा,
ह्याऽऽरब्धभक्तेश्च विवर्धनं स्यात् ।
भक्तेश्च माहात्म्यमतीव चोच्चं,
तथाऽपि नाऽस्माकमपायचिन्ता ॥

२४
कारुण्यवाक्यं न तु कार्यवाक्यं,
कारुण्यकक्ष्या प्रथमप्रवेशा ।
कार्यस्य कक्ष्यामधिरुह्य पूर्या
सत्यं शिवं सुंदरमेव, भक्तिः ॥

२५
पिपासया पूर्णमनुष्यमेनं
"अहो नु कष्टं ! जलपानमस्तु" ।
इत्यादि वाक्येन सुसान्त्वनं स्यात्, ।
दाहप्रशान्तिस्तु जलाऽऽनयेन ॥

२६
एवं च पानीय-जलं नयेत
पिबेत चाऽन्यो द्वयनिर्मितं तत् ।
भक्त्याऽऽरव्य मेवाऽऽद्रियते हि भक्तैः
शेषत्व-शेषित्व मतोऽनुबद्धम् ॥

२७
रामायणं यद्यपि पाठ एव
ह्याऽऽप्यायनं कर्णतटे करोति ।
अदृष्टशक्तिस्तु विराजते सा !
तथाऽपि रामायण-कार्य शीलता ॥

२८
समग्ररूपेण समस्त-जीवेऽ
प्यावश्यकी, सा खलु पूर्णभक्तिः ।
"नाऽहं भवेयं दशकंठ रूपः,
विभीषणोऽहं, न च कुम्भकर्णः ॥

२९
"स्वापदेश" इति यश्च कथ्यते
काव्यगैस्तु नरवीर-विक्रमैः ।
सोऽयमेव जनजीवनाय वै
कार्यरूपमुपयातु भावना ॥

३०
कवेश्च सन्तोष अहो नु जायते
काव्यप्रभुश्चाऽपि मुदा समेधते ।
आचार्यमाला-रुचिरेव पीयते
वागर्थसम्पृक्तिरहो विराजते ॥

३१
यच्छील एवास्ति मम प्रभुर्हि
तच्छील एवाऽयमहं नु दासः ।
दृष्टाय सर्वं शरणाऽऽगतस्य,
किं वाऽस्ति गम्यं परलोकरम्यम् ?

३२
पितुर्वचः-पालनमेव रामः
सामान्यधर्मं विततं चकार ।
विशेषदृष्टिस्तु स लक्ष्मणोऽपि
रामस्य सेवां नियतामतानीत् ॥

३३
स्वतन्त्रकैङ्कर्यपराच्च तस्मात्
परप्रतन्त्रो भरतः प्रकृष्टः ।
राज्यस्य भारे 'पर"-हर्ष-हृष्टः
सौमित्रि-दोषं प्रकटीचकार ॥

३४
रामस्य सौन्दर्यमहोऽन्तरायं
जित्वा सदा यो ह्यभवद् "रिपुघ्नः" ।
या तस्य निष्ठा भरताऽर्पिता सा
भक्ताऽऽश्रया भागवतैकदैवा ॥

३५

रामेण साम्यं परमं तदस्तु
भ्रातृत्रये यानि सुसूक्ष्मकाणि ।
तान्येव भूयासुरहो ममापि,
सीतेव रामाय समर्पितः स्याम् ॥

३६

ततोऽपि सा मे गतिरस्तु भूयः
या वै सदा मारुतिभृत्यगा स्यात् ।
रामस्य कार्यं सततं क्रियेत
विश्रान्ति लेशो न हि गृह्यते च ॥

३७

समाजजीवी ह्यनिवार्यकर्मा
चाऽन्येषु कर्माणि विसृज्य तूष्णीम् ।
विहाय देहश्रममद्धि चेत्तु
न शोभते, सा च न भक्तिरेव ॥

३८

कार्यं स्वकार्यं श्रमपूर्वकं स्यात्,
नाऽहं कदाऽपि प्रभुरस्मि हन्त !
न कोऽपि भृत्यो मम चाऽस्ति सत्यं,
मत् स्वामिभावः सुतरामवद्यम् ॥

३९

यथाऽहमश्नामि तथेह सर्वे
भोक्तुं समानं ह्यधिकार-भाजः ।
कदाऽपि सोऽहं न हि सञ्चिनोमि,
न्याय्यं न तावद् बहु मत्सकाशे ॥

४०

चौर्यं तदेतद् यदु शिष्यते मे,
तदर्प्यते रिक्त-जनस्य हस्ते ।
समाजरूढ्यां वितथं यदत्र
गताऽनुगो नाऽयमहं भवामि ॥

४१

मत्पापमेवाऽत्र निमित्तमस्ति
दारिद्र्य-दौर्भिक्ष्य-महाऽर्घतादौ ।
अतो यथा स्यान् मम देहपोषः
तावत् पदार्थेषु ममाऽधिकारः ॥

४२

इदं हि रामायण कार्य-दाक्ष्यं
दक्षेण कार्येण हि पूर्णलक्ष्यम् ।
पूर्णा सुभक्तिः परिकथ्यते सा
कैङ्कर्यमेवेति सदा स्थितिर्या ॥

३४

कर्मेति च ज्ञानमितीर्यते यद्
भक्तौ हि पूर्णं प्रविलीयते तत् ।
ततो हि भक्तिः प्रियकिङ्करस्य
भावे स्वनिष्ठा गुरुसम्मता सा

४४

भक्तेश्च मूलं न हि शास्त्रमस्ति
भक्तिश्च सा या हृदये चकास्ति ।
क्षणे क्षणे नूतनभावपक्वा
दशाप्रदेशे समये समस्ते ॥

४५

कालस्य चिन्ता न च देशचिन्ता
दशाविचिन्ता न कदाऽपि भक्तौ ।
साक्षात् प्रियत्वा दमृतायमानं
औत्कंठ्य मेवाऽस्ति सदा ह्यतृप्तम् ॥

४६

सत्याय सौन्दर्यजुषे परस्मै
कल्याणपूर्णाय सुकोमलाय ।
योऽपूर्वगः प्रेमरसोऽभिवृद्धः
स एव भक्तिः परमार्थरूपा ॥

४७

स्वयं ह्यनुष्ठानविधौ स्वभासा
रुचिः प्रवर्धेत यथा नु भक्त्या ।
प्रतिक्रियं सैव समुज्वलन्ती
योच्छ्वास-निश्वास पर-स्वभावा ॥

४८

व्यक्तीश्च सर्वा अवगाहते सा
समस्तभूतानि चराचराणि ।
अपत्यमम्बेव सुगाढमेव
श्लिष्याच्च, मुञ्चेत कदाऽपि किञ्च

४९

सर्वान्तरो यो हि विशिष्ट एकः
तदर्थमेवाऽस्ति च भक्तिरेका ।
भिन्नेषु भिन्नेषु च दर्शिताऽपि
तमेव चाऽन्ते विषयीकरोति ॥

५०

न केवला वाचनिकी हि भक्तिः
न मानसी वा कृतिमात्ररूपा ।
सा काशते प्रज्वलतेऽनुभूय-
माना हि हृत्पद्मपदे घने हा !

५१

सुकोमलं मे मन आविरासीत्,
प्रभूतभूमा हि पराऽऽत्मभूतः ।
विद्योतमानोऽद्य स दृश्यतेऽयम्,
खद्योतकल्पं हि जगत् समस्तम् ॥

५२

अन्तो हि नास्त्येव तु यस्य भूम्नः,
हाऽनन्तता वास्तविकी मता मे ।
नास्त्येव नास्त्येव परिच्छिदाऽथ
वर्धेत वर्धेत निरस्तसीमा ॥

५३

भूमा च तद् ब्रह्म, न चाऽल्पगं कं,
सुभाषणं येन सहेव भाति ।
तस्याऽपि सन्देशगतिश्च भूयात्
सुसूक्ष्मकर्णेन "हृदा मनीषा" ॥

५४

ज्ञानस्य भक्तिश्च विशेष एव,
सा पच्यते किङ्करतास्वरूपा ।
अन्योन्यसंश्लिष्टत्रिवेणिका या
भेदप्रभेदो वचनार्थमेव ॥

५५

ज्ञातुं च कर्तुं च स्वपर्वभेदाः
ज्ञानक्रियाभक्तय एकरूपाः ।
अङ्गाङ्गिभावेन च भेदवादो
लोकं तु दृष्ट्वा रुचिभेदभिन्नम् ॥

५६

क्षणे क्षणे नूतनां भजन्ती
प्रत्यक्षधारा सततैकसारा ।
संश्लिष्टभावेन तदर्पितेह
भक्तिर्भवेच्चेतनधर्मभूता ॥

५७

द्रवीभवद्भाव समुत्प्रवाहा
नित्यैकसौख्याऽद्भुतभावहेवा ।
अचिन्त्यपाराऽप्यनवद्यसेवा
सुखस्वरूपाऽप्यनुरागभावा ॥

५८

सर्वार्थसेवा सरसार्थसेवा
स्वविस्मृतिः स्वार्थनिरर्थसेवा ।
परैकलाभा सहजैकभावा
लोकातिगापीह सुलोकसेवा ॥

५९

स्वयत्न-लभ्येति पुरो-विकासा
त्वयत्न-लभ्येति ततो-विकासा ।
उपायरूपा ऋषि पुङ्गवानां
फलस्वरूपाऽगतिकिञ्चनानाम् ॥

६०

अस्मत् स्वरूपं गुणभावरूपं
सम्पत्-स्वशीलादि पराऽभिरामम् ।
पराऽनुरूपं च भवन्ति यत्र
तदेव भक्तेः किल सूत्रमत्र ॥

६१

अद्वैतभावस्य विशिष्ट शैली
प्रेमप्रसन्ना सहभाव-केली ।
विश्लेष संवेदन भूरिभावा
संश्लेष- भोगोर्जित-देवभावा ॥

६२

द्वैतस्य सत्वेऽपि परप्रतन्त्रा
द्वैतस्य सत्वेऽपि च शून्यतन्त्रा ।
द्वैतस्य सत्वेऽपि पथैक्यमन्त्रा
समञ्जसाऽद्वैत-फल-प्रमन्त्रा ॥

६३

समर्पणाऽऽनन्द-समर्पणी सा
"नमः" पदस्यैव विभूषणी सा ।
इहाऽपि नाऽस्त्येव ममत्व-भक्तिः ॥
पत्र नाऽस्त्येव ममत्व-सक्तिः ॥

६४

ममत्व नाशो हि परार्थभक्तिः
जीवात्म-भावस्य विलीनताऽऽर्तिः ।
अद्वैतशक्तिः प्रभुकीर्तितृप्तिः
"अहं" क्षयं याति, तथैव भाति !

६५

योगाऽऽख्य-कालेऽपि सदा स्फुरच्च
व्युत्थान-कालेऽपि समं स्फुरच्च ।
यस्यैव कारुण्य-बलेन तच्च
स्वयं स्फुरज्जयोतिरहो बृहच्च ॥

६६

सर्वाऽऽत्मभावेन निराकृतिश्च
जगच्छरीरेण दृगताऽऽकृतिश्च ।
विलक्षणेनाऽपि स्वमूर्तिमांश्च
सन्दृश्यते हा स्मित भूषितश्च !

६७

स्वयं प्रियो ऽतृप्तसुधायमानः
सुखायमानः सुखगन्धनो यः ।
मामेवमालिङ्ग्य विनोदनो यः
सुखीयमानः सुखवन्धनो यः ॥

६८

भक्तेषु स त्वं प्रकटीचकर्थं,
प्रभो विभो त्वत्-कृतिरेव भक्तिः ।
न मेऽस्ति काऽपीति निदर्शितोऽहं
निर्हेतु-कारुण्य-सुपात्र-दासः ॥

६९

चर्चा न कार्या, क्रिययैव कार्या
समस्त-भूतस्य तु मूलचिन्ता ।
सा हि प्रसेवा रघुनायकस्य
लोकाऽभिरामस्य महाव्रतस्य ॥

७०

सीता तदाऽनीयत रावणेन,
मातैव नीयते धनाऽसुरेण !
ततो हि न स्यात् क्रयविक्रयादि
भूमे,रिदं नूतन-रामचित्रम् ॥

७१

"लक्षावधि-ग्राम समूह" एवं
नूत्नं हि रामायणमद्य दृश्यम् ।
भूम्यर्थ-देहश्रम-बुद्धि-दानं
प्रसारितं सर्व हितार्थमेवम् ॥

७२

दृश्येत भक्त्या यदि सूक्ष्मदृष्ट्या,
प्रचाल्यतेऽद्याऽपि कृतिः शुभा सा ।
श्रुतौ स्मृतौ शब्दविलास एव,
लोके हि पश्येम सदर्थजातम् ॥

७३

लोके सुक्लृप्तं ह्यनुसृत्य जन्यं
शास्त्रादिकं, नैव स्वतन्त्रतन्त्रम् ।
सदर्थयोगाद्धि समस्तशास्त्रं
प्रामाण्यमायाति हि शब्दतन्त्रम् ।

७४

अन्तो हि नास्त्येव च यस्य, तस्य
वाचा विभूषाऽपि न पूर्णताऽस्य ।
अतो हि नम्रैर्भवितव्यमेव
सर्वोपदेश-प्रद-धार्मिकेषु ॥

७५

तस्माद्धि तत्कालविभूति-पुम्भिः
यच्चाऽपि तत्तत्-समयेषु दृष्टम् ।
तदेव सर्वैः प्रविवेचनीयं
आचारमार्गे च निवेशनीयम् ॥

७६

प्रामाण्यमेतद्धि मुनीन्द्रलोके
यथोत्तरं भावितभावनाऽऽढेच ।
सर्वाऽविरोधेन यदूपपन्नं
सङ्ग्राह्यमेवाऽपि नचाऽऽग्रहः स्यात् ॥

७७

इदं हि रामायण-दर्शनं यत्
नवं नवं तद् रमणीयदृश्यम् ।
अस्माकमप्यस्तु नवं नवं हृत्
नवं नवं जीवनमस्तु शस्यम् ॥

भक्ति शक्तिः

७८

"रामाऽनुजो" नाम विराम-भावः
देहाऽऽत्मभासाद्, अनुसृत्य रामम् ।
स्वदास्यभावः सततं समग्रः,
व्यामोह-वृद्धिश्च परात् परेण ॥

७९

दयाऽपि भूतेषु चराचरेषु
लोकाऽऽभिमुख्यं, न तु लोकपातः ।
स्वतन्त्र-चिन्ता, गुणसार-दृष्टिः
विसर्जनाऽऽदान-विवेक पुष्टिः ॥

८०

इमे गुणा यत्र लसन्ति चाऽन्ये,
स एष "रामानुज" शब्दवाच्यः ।
सङ्कोचभावेन सतां प्रबन्धः
मूर्तौ यदेतन्, न हि तावताऽलम् ॥

८१

मूर्तेश्च पूजा न हि भावदोषात्
प्रचालिता, प्रेमपुरःसरा सा ।
तथाऽपि लोके तनुभेदभावः
सत् सङ्गतौ किञ्चिदिवाऽस्ति किञ्चित् ॥

८२

मूर्तेश्च देवस्य तथा गुरूणां
सामान्यदृष्ट्या न हि संविदेत ।
विशेष- दृष्टिः समपेक्षणीया
तद्-दृष्ट्यभावाज्जगति प्रजल्पः ॥

८३

मूर्तेश्च पूजा यदि सर्वमूर्तीः
न शक्नुयाज्जग्धुमतो विवादः ।
प्रचाल्यते तत्व-विवृद्धयभावात्
तस्माद् विचारः प्रविवेचनीयः ॥

८४

सर्वान्तरो ह्येक इतीह दर्शनं
सदा स्फुटं स्याद् यदि नास्ति बाधनम् ।
तवेष्टमूर्तौ भगवान् यदस्ति चेत्
सर्वाश्च मूर्तीः किमिमा न पश्यसि ?

८५

किं वाऽस्ति किञ्चित् परमे न चाऽस्ति ?
किमर्थमेवं तव मुग्धताऽस्ति ?
आधार एवाऽस्ति य एव सोऽपि
नारायणः सर्वत एव कोऽपि ॥

८६

सदाऽपि भूयाद् विभुविश्वरूपं,
सर्वे च मोहा विलयं प्रयान्तु ।
एकादशीं ध्यायसि चेत् सदा त्वं
सर्वाऽविरोधेन "तदोम्" सुपक्वम् ॥

८७

स्वस्यापि निर्बन्ध अथाऽत्र माऽस्तु
पराऽऽग्रहो योऽपि च सोऽपि मास्तु ।
विशिष्टभावे यदि तिष्ठसि त्वं
उदार एवासि विशेषणेषु ॥

८८

पृथक्प्रसिद्धिः कुत एव चैषा ?
सर्वाऽपृथक्सिद्ध-परात्मभूते ।
सर्वाऽऽकरे सर्वगते च भूम्नि
नैषाऽल्पदृष्टिः कतराऽपि कार्या ॥

८९

सतां हि पूजा सुसती प्रभूयात्
विपाटय सर्वाणि च बन्धनानि ।
जातेश्च देशाच्च सुविग्रहादृवा
ह्यतीमेवत्राऽस्ति गुरोर्गुरुत्वम् ।

९०

भक्तौ विशुद्धिः सहजैव या स्यात् ।
सा ज्ञानजा मोहविवर्जिता स्यात् ।
तथापि मुग्धा लसतीह चेष्टा !
तस्मादियं व्यापक भक्तिरिष्टा ॥

९१

शक्त्या विहीना,ऽपि सुभक्तिरेषा
कार्यार्थमागच्छति नैव लोके ।
भक्तिर्हि रामानुज-दृष्टिपूता
समाजगा स्यान् नतु केवला सा ॥

९२

समाजशक्तिः परिवर्धते हि
भक्ति विनैवाऽद्य जगत्यहो धिक् !
इयं स्थितिः सा परिवर्तनीया
गुरोश्च भक्तैर्हि तदिङ्गितज्ञैः ॥

९३

राज्यप्रभावोऽपि धनप्रभावः
हिंसाप्रभावश्च जगत्समग्रे ।
सामर्थ्यभासा विलसन्ति चैव,
तथाऽपि तेषां नहि जातकं शम् ।

९४

जनप्रभावो हि विवर्धनीयः
दानप्रभावो हि मनस्सु नेयः ।
प्रेमप्रभावो हि समर्थनीयः
तदैव रामानुजपूजनौजः ।

९५
पुरेषु पल्लीषु जनस्य शक्त्या
सेवा यथा स्यात् स्वयमेव नित्या ।
"यद्वद्रि" तुरुयेषु चकास्ति योऽयं
रामानुजस्यास्ति समाजशोधः ॥

९६
ज्ञाने च भक्तौ च तथैव कार्ये
विरोधभावं स हि नो सहेत ।
तेन त्रिवेणी परिकल्पिताऽहो !
लोकस्य विच्छिन्न-विचारशर्याम् ॥

९७
ज्ञाने च भक्तौ च तथैव कार्ये-
ष्वेकामनुस्यूतगतिं चकार ।
समर्पणं ब्रह्मणि कारयन्त्सः
संस्थापयामास त्रयैक-रस्यम् ॥

९८
गुरोरुपासा गुणसेवना सा
व्यक्तेरुपासा च विभूतिसेवा ।
स्वरूपरूपे हि नहि त्यजेते,
भक्तिः समग्रा गुरुचातुरीयम् ॥

९९
कायेन सेवा करणैश्च सेवा
ज्ञानेन सेवा च हृदा च सेवा ।
भक्तौ प्ररस्येत समैकरस्या
रामानुजस्याऽस्ति समाजशोधः ॥

१००
गुणप्रशोधश्च दिने दिने स्याल्
लोकात् प्रधावश्च सतां हि माभूत् ।
आचार्यसङ्घानत एव शुद्धान्
समीचकारात्म-हिताय बुद्धान् ॥

* कर्णाटकस्य मंड्य.जिल्लास्थे "मेलुकोटे क्षेत्रे"

१०१
ग्रामेषु पल्लीषु सुसंस्कृतां श्च
सेवाव्रतान् स्थापितवानयं च ।
येऽद्याऽपि देवालयपूजने च
भैषज्य दानादिषु निष्ठिताश्च ॥

१०२
सन्यासिनां सप्तशतो, द्विषट्क-
सहस्र वैराग्यधरा जनाश्च ।
शतत्रयी ब्रह्मयुवासिनीनां
लक्षाधिकाश्चाऽपि जना विचेरुः ॥

१०३
समाजसेवां परमार्थदृष्ट्या
प्रीतिप्रकर्षान् त इमे व्यतन्वन् ।
ध्यानाऽऽख्यवृत्तिर्मम मास्तु भक्तिः
सदाऽस्तु मे किङ्करतासुवृत्तिः ॥

१०४
कर्माऽऽख्य योगेन यदा स्वचित्तं
सुनिर्मलं भाति ततः स आत्मा ।
आत्मानुभूत्या तदतः परो यः
प्रीतिप्रकर्षः स हि पारमार्थः ॥

१०५
धारा सदा या भवतीव तैले,
धारात्वविच्छिन्न रसस्वरूपा ।
भक्तिर्भवेत् संस्मृतिसन्ततिः सा
प्रत्यक्ष साम्या मतिपाकपक्वा ॥

१०६
'ध्रुवा, स्मृति, वेदन, दर्शनादि
यो पासना" चेति गति प्रसिद्धा ।
सेवैव भक्ति भजनं च सेव
ब्रह्मज्ञताऽऽनन्द रसश्च यैव ॥

१०७

"यमेव चैषो वृणुते परात्मा
तेनैव लभ्यः स्वयमेव चाऽऽत्मा ।
अत्यर्थभावा परदेवता यं
वृङ्क्ते च तस्मै वृणुते तनूं स्वाम्" ॥

१०८

एतछ्रुते बृंहणतत्परा सा
गीताऽपि कृष्णस्य, "स्वभक्ति"माह ।
नाऽन्योऽस्ति पन्था इति चाऽपि वक्ति,
मुक्तेरुपायो ह्यत एव भक्तिः ॥

१०९

पूर्वं, "परा भक्तिरिहाऽऽगता चेद्
द्रष्टुं प्रभूया "दभितो निवेशः" ।
द्वितीय पर्वाऽस्ति"परं च ज्ञानं"
प्रत्यक्षसिद्धि, स्तत एव"भीः सा" ॥

११०

अहो नु विश्लेष इवावभाति !
मा भूत कदपीह विभो विना माम् ।
विश्लेष भीरुत्वसुमार्दवं, च
श्रेष्ठा दशा सा "परमा हि भक्तिः" ॥

१११

सर्वेश्वरेणाऽपि न शक्यते यत्
सुसाध्यते तद् गुरुरूपगेन ।
गुरोश्च कार्यं यदु शिष्यते तत्
पूर्यं नु कार्यं हि तदीयमार्गैः ।

११२

विकासवादो हि स मुख्य एव,
जगद्धितायाऽद्य यदेव दृश्यम् ।
सर्वं च रामानुज-कार्यमेव,
त्रिकाल-शक्तो हि गुरुर्मतः सः ॥

११३

सर्वेऽपि सत्-कार्य रता भवेम
न केवलं भूत-भविष्य-वादाः ।
"अद्याऽपि सा विद्यत एव शक्तिः"
एवं सदा स्यादमिता हि भक्तिः ॥

११४

व्यक्तिस्थभक्तिः स्वसमाज-सेवा-
रूपं यदैव प्रभजेत लोके ।
भक्तौ च शक्तिः सुलभा समिद्धा
तथात्व-भक्त्यैव मही समृद्धा ॥

११५

सर्वान् गुरून् भावय भक्ति-साम्ना
सर्वेऽपि पूताः प्रभु-दृष्टि-भूम्ना ।
भाषा-प्रदेशादि-रुचिप्रभेदान्
समूह सर्वान् गुरुहृन्निवासे ॥

११६

अये सुभक्ताः ! प्रभवन्तु शक्ताः,
भवन्त एवाद्य जगद्धिताय ।
अग्रे समायान्तु, तदा हि भव्यं
जगत् समग्रं दृढभक्तिदिव्यम् ।

११७

व्यक्तेरिदानीं गुणसन्ततिस्तु
समाजगा स्यादिति कालसूच्या ।
तदर्थमापेक्ष्यत एव भक्तिः,
भक्तेरनु स्यादमिताऽपि शक्तिः ॥

* प्राक्तनेषु चतुर्षु दक्षिणपार्श्वेष्वपि एवमेव कृपया पठनीयम्

११८

*अशेष-कैङ्कर्य-रतिश्च नित्यं
 प्राप्यं तदेवाऽस्ति विशिष्ट-सत्यम् ।
नित्या रतिः सा तु कथं भवेद् वा ?
 प्रेमात्मसद्भावनयेति पक्वा ॥

११९-१२०

प्रीतिश्च कीदृग् भवतीति सेयं ?
 निरस्त-सीमातिशय-प्रमेयम् ।
प्रीतिश्च लभ्या कथमेव चेत्तु !
 "ज्ञान-प्रभा-शक्ति-बलेश्वरत्वम् ॥
वीर्यं च यस्मिन् प्रविकाशतेऽस्मिन्
 अनारतोऽनन्य-सुखानुभावः ।
नित्य-प्रवृद्धोऽपि निरस्तसीमा
 वैशद्यकाष्ठो भगवत्परश्चेत् " ॥

१२१

सचाऽपि देवाऽनुभवः कथं चेत् !
 "पर-प्रभक्त्या " "परसंविदा च" ।
अनन्य-नित्या-"परमाऽऽरूय भक्त्या";
 त्वेतत् त्रयं किं विषयी-करोति ?

१२२

"पादारविन्दद्वयमस्य;" "पार-
 मार्थिक्य-शाली भगवान् य एषः" ।
"सोऽयं कथं वा भवता नु लभ्यः ?"
 "येयं सुपात्री शरणागतानाम्

१२३

ममाऽपि माता जगतोऽपि माता
 श्रीर्देविका नित्य-निवास भूता ।
जीवादि-दोषाऽऽकलनेऽप्यपापा
 नारायणस्याऽभिमताऽनुरूपा ॥

१२४

श्रये च तां तामिह सोऽहमेनां
 पद्मालयां पापिशुभां प्रसन्नाम् ।
स्वरूप-रूपार्थ-गुणैरपीत्थं
 देवाऽनुरूपाऽभिमतां च नित्यम् ॥

१२५

देवी-प्रसन्नं तत आश्रये तं
 नारायणं प्राप्त-मुपायभूतम् ।
सेवा च लक्ष्या परमार्थभूता
 तत्साधनं पादतलाऽर्पणी सा ॥

१२६

या कीर्त्यते त्वन्तिमसाधनं चे
 त्येवाऽस्ति चैवं परमार्थभूता ।
यथास्थिता पुष्कल-नित्यरूपा
 प्रपत्तिनाम्नी त्वभियातु मे सा " ॥

१२७

"त्वत्-कर्तृका या शरणागति स्त्या
 भवाब्धि-पोतायत एव सत्या ।
सम्पत्स्यते सर्वहिते सुपथ्या"
 गुरोः स्वमातुश्च मिथः प्रकथ्या ॥

१२८

निःश्रेणिका चाऽस्ति गुरुप्रदत्ता
 त्वस्मादृशां भक्तिविवर्धनार्थी ।
नित्याधिरोहचा गुरुहार्दभक्त्या
 सम्भाव्यमानाऽऽत्मगुणाभिसक्त्या ॥

* "पारमार्थिक-भगवच्चरणारविन्द-युगलैकान्तिकात्यन्तिक-परभक्ति-परज्ञान-परम भक्ति-कृत परिपुर्णानवरत-नित्य विशदतमाऽनन्य प्रयोजनाऽनवधिकातिशय प्रिय भगवदनुभवजनिताऽनवधिकातिशयप्रीतिकारिताऽशेषावस्थो चिताऽशेष शेषतैक रतिरूप नित्य कैङ्कर्य प्राप्त्यपेक्षया पारमार्थिकी भगवच्चरणारविन्द शरणागतिः यथावस्थिताऽविरताऽस्तु मे ।"

"अस्तु ते । तयैव सर्वं सम्पत्स्यते "

इति श्री रामानुजस्य शरणागति गद्यस्य द्वितीय तृतीय चूर्णिके अत्राऽनुसन्धेये ।

१२९
"गुरोरभिध्यान–बलेन चैव
सर्वं हि सम्पत्स्यत आसमस्तम्" ।
एवं प्रदत्तं वचनं च मात्रा
तस्माद् गुरुः सर्वशुभोदयोऽयम् ॥

१३०
गुरोः प्रशक्त्या जननीसुशक्त्या
जना लभेरन् स्थितसाधनं तम् ।
यस्यैत्र छाया समशीतळोष्मा
समस्त तापत्रय दूर वर्ष्मा ॥

१३१
"सर्वैश्च शब्दैः प्रथमं प्रकथ्यं
जडं च तत्तत् सुविदृश्यमानम् ।
तस्याऽभिमानी तत एव शब्दात्
कथ्येत जीवोऽपि, ततोऽन्तरात्मा" ॥

१३२
वादादिभेदप्रभवं समस्तं
त्वन्तर्ज्वरं शामयति स्म चैवम् ।
रामानुजोऽयं सततं सुभद्रः,
"द्वेषादिकं माऽस्तु कुतोऽप्यभद्रः" ॥

१३३
"कथं त्विदं स्यात् ?" गुरुरेष वक्ति,
"जीवात्मनो नैव हि शक्ति–पूर्तिः ।
प्रभोः स्वशक्त्या प्रविचोदितोऽयं
दोषाऽऽकरे मय्यपराध्यतीह" ॥

१३४
इत्यादि शोधा जगतां हिताय
रामानुजेनाद्भुत बुद्धिदत्ताः ।
अस्पृश्यलोकाः गुरुसेवनाऽऽर्ताः
"श्रीवंश्य" नाम्ना दयया प्रपूताः ॥

१३५
समूह कार्येषु विशुद्धिरिष्यतां
विशुद्धकार्येषु समूह इष्यताम् ।
समूह–शुद्धी हि नरस्य सार्थता
ज्ञानस्वरूपस्य निरन्त सारिता ॥

अविरोधः

१३६
विरोध-परिहाराय रामानुजमहर्षिणा ।
सर्वशब्द-प्रवाच्यत्वं ब्रह्मणः समुदीरितम् ॥

१३७
सर्वशब्द-प्रवन्द्यत्वं ब्रह्मणः समुदीर्यते
सर्व–रूपप्रदृश्यत्वं सर्वकर्म–प्रपूज्यता ॥

१३८
यद्वा तद्वा भवतु वा, प्रथमं ब्रह्मसंस्मृतिः ।
सर्वदा सर्वथा चाऽस्तु पश्चात् तत्तद्विमर्शनम् ॥

१३९
वेदान्तश्रवणेनैव व्युत्पत्तिः पूर्यते बुधैः ।
विचारे कृतितश्चाऽपि ह्यविरोधः प्रपूर्यते ॥

१४०
द्वैविध्यभावो मनसा विसार्यः,
परः स एको दृढतः सुपूज्यः ।
यथा तथा वाऽपि भवन्तु चाऽन्ये,
त्वं तांस्तथा भावय मा प्रपन्न ॥

१४१
तद्रूप तद्भाव–लसद्–गुणेन
नीरूप–निर्भावन-निर्गुणेन ।
सर्वेऽपि ये भिन्नपथैः स्वसुसेवां
एकस्य देवस्य वितन्वते ते ॥

१४२
विरोधभावो यदि मय्यभूच्च
तदर्थमेवं त्वभिवृद्धमासीत् ।

"मतं मतं सर्वमिदं विरुद्धं"
तस्मादहं त्वाऽऽग्रह-मुक्त एवम् ॥

१४३

एषा स्वमुक्तिः सकलान् जनांस्तान्
एकस्य देवस्य पदेऽर्पयेच्च ।
सर्वाऽऽग्रहाः शून्यतरा भवन्ति
वेदान्त एवाऽद्य सुतिष्ठितः स्यात् ॥

१४४

अद्वैतं ब्रह्मरिह्यं स्वरसजमनघं योग हृद्-
ध्यानगम्यं
सर्वं यस्मिन् सुपूर्णं निहित-विधृतं प्राप्य धर्मा-
ऽपृथक्त्वम् ।
तस्य द्वैविध्य-बुद्धिं त्यजत बहुमुखामेक
एवाऽस्ति धर्मी
सर्वे सूत्रे सुमानीव ग्रथितमणिवत् सन्ति सत्ये
च सत्याः ॥

१४५

कर्म ब्रह्म-विरोधं नय-चारित्र्ये बौद्धा जैना
ह्यशमन्त
सत्यब्रह्मणि निष्ठारूपी शङ्करभगवान् मिथ्ये
त्याऽऽह ।
"मिथ्याशून्यस्या" र्थस्त्वाकिंचन्यं त्विति रामा-
नुज मुनिना
"मीमांसा-कर्माऽहिंसा ज्ञानत्रिवेणी" कैङ्कर्या-
ऽऽख्या सङ्गमिता ॥

१४६

भाषा-भिन्नाः, भाव-भिन्ना न सन्ति,
स्वान्तर्भावः सर्वभाषा-समानः ।
यद्यद् भिन्नं भासमानं विरुद्धं,
तस्य त्वैक्यं योग-काले समिद्धम् ॥

१४७

व्युत्थान-काले भवतीव भेदः
वक्तुः स्वशब्देषु तथैव श्रोतुः ।
एकं तु चैकान्त-सुदृष्टवस्तु
परं भिदा भाति च शब्दतस्तु ॥

१४८

विरोध एवाऽस्ति न चैव कश्चित्
सुधा-प्रपानं कृतवत्सु तेषु ।
सर्वे हि श्रेष्ठाः प्रभु-दृष्टि-पुष्टाः,
दृष्टा विरोधाः स्व-विवेक मृष्टाः ॥

१४९

उपासना-भेद इवावभातु
विकल्पमेवाऽस्तु विवादनं तु ।
सर्वाऽऽकरे सर्व-सहे त्वनन्ते
का वाऽस्ति चर्चा सुखभोजनान्ते !

१५०

न नूतनं किञ्चिदहं ब्रवीमि,
पुरातनं सर्वमिदं गृणामि ।
"नूत्नं पुराणं" *समयस्य कालः
नाऽस्त्यत्र कश्चित्, सहि कालकालः ॥

१५१

मनःसमाधान विरामतस्तु
विरोधिताभानमितस्ततस्तु ।
विरोधिताऽत्ता स तु सत्वमायी
तार्क्ष्याधिरूढोऽपि हि शेष शायी ! ॥

१५२

त्यक्त्वा हि कर्मादिकृतं त्रिभेदं
अस्थायिनं तं चिदचिद्विकारम् ।
सदैकरूपं तदु दृश्यतां शं
सर्वं हि रत्नं शुभकौस्तुभाऽऽह्वयम् ॥

*सङ्केतस्य कालनमित्यर्थः

१५३
लीला-विभूति र्नहि बन्धनाय
यद्यस्ति दृष्टिर् "भगवद्विभूतिः" ।
पारार्थ्यभावे सति जाग्रतीह,
सर्वत्र दृश्येत विभोर्हि पूर्तिः ॥

१५४
अजानताऽऽप्तं नृपपुत्रकेण
दुःखं पितुश्चोपवनं गतेन ।
ततश्च संबन्ध-सुबोधितेन
सुखं चिरं क्रीडितमेव तेन ॥

१५५
अजीर्ण-वेदान्त- रहस्यकत्वात्
सुजीर्ण मेवाऽभवन् मठालयम् ।
देवस्य सान्निध्यमपेक्षितं चेद्
व्यावर्तकी दृष्टिरुपेक्षणीया ॥

१५६
व्यावर्तकत्वं तदु लक्षणं स्याद्
देवेतरस्मिन् न तु सर्वलक्ष्ये ।
देवे तु सर्वात्मनि लक्ष्यमाणे,
सर्वात्म-सङ्ग्राहक-दृष्टिरस्तु ॥

१५७
तस्माद्धि जात्यादिषु नाऽतिदृष्टिः
कृता च रामानुज–धीरवर्यैः ।
ननाविधास्तेन, महात्मभिस्तु
बाधादयो जीवन-मार्ग-भुक्ताः ॥

आत्मधर्मः
१५८
जातिश्च सा स्यात् गुरुसम्मता यच्
छरीर–संस्थान–विशेष एव ।
अङ्गाङ्गि–विन्यासत एव कथ्या,
जातिश्च नाऽस्त्येव पृथक् स्वकथ्या ॥

१५९
अजांस्तथा गो-महिषान् खरांश्च
दृष्ट्वैव जातिग्रह एधते च ।
का जाति ? रित्येव नृलोकपृच्छा
न शोभते चारुतरा नरेच्छा ॥

१६०
प्रच्छाद्य संछाद्य कियद्विदूरान्
नेतुं समर्थोऽसि नरांश्च धीमन् !
पक्षाच्च जातेश्च कुसङ्घकाद्वा
देशाद् विविक्तास्त इमे "स्त्र" भूताः ॥

१६१
जातिश्च सङ्घश्च स्वदेश-पक्षाः
तदा तदा व्यापक-कारिणो ये ।
विज्ञान-कालेऽद्य मनुष्य-लोके
पर्याप्ततां नैव वहन्ति ते ते ॥

१६२
व्यक्तीभव त्वं पुरतो "विराट् सः"
पक्षादिकुक्षौ तव मा प्रवेशः ।
सङ्घादि-बद्धस्तु खिलीकरोषि
व्यक्तेर्विशेषं, बत भाविभेषि ॥

१६३
जात्यतीत-समाजश्चेत्
नैव धर्म-निराकृतिः ।
अपार्थोऽयं निराकार्यः
स्वधर्म-रतिभिः सदा ॥

१६४
सदर्थोऽयं स्थापनीयः "सर्वधर्म-समानता" ।
अध्येतव्यं च धर्माणां साहित्यं सर्वतोमुखम् ॥

२६५
सर्वतः सारमादद्याद् "वेद बैबल् खुरानतः" ।
आत्मप्रत्यक्षसाहाय्ये तावदर्थं समादरात् ।

१६६

वर्णास्तु वैविध्य-विभूषणाः स्युः
विवेककारा इव राजहंसाः ।
वंशाऽनुगाः काश्चन पक्वशैलीः
आलम्ब्य तिष्ठन्ति समाज पालीः

१६७

हंसाऽऽख्य-वर्णः प्रविशिष्यते सदा,
समाज-कार्येषु नरस्य भूमिकाम् ।
दृष्ट्वैव कार्यप्रविभाजनं यदि
गुणाऽनुरूपं सहजं, सुखं भवेत् ॥

१६८

न तावता श्रेष्ठकनिष्ठभावः
परस्परं वर्णिषु मानवेषु ।
सर्वेऽपि वर्णा अभिपूरकाश्च
मुख्यत्वगौणत्वभिदाप्रभिन्नाः ॥

१६९

शिक्षारक्षोदरभरणादिप्राप्तिः सेवया च
चातुर्वर्ण्यस्रजनमभवन् नाऽन्यथा दोषचिन्ता ।
मुख्यं कार्यं सकलनियतं स्वस्वधर्मं प्रकुर्वन्
विश्वां मूर्तिं भजति खलु वै दोषदूरः शुभः
सन् ॥

१७०

उद्योगभेदे न हि जातिभेदनं
प्ररूढिमारूढमहो नु भेदनम् ।
रूढेः प्रहारः क्रियते तदा तदा
ऽप्यध्यात्मभावेन विचारचक्षुषा ॥

१७१

सेयं हि भक्तिश्चतुरा समाजके
प्रवर्तनं लाति नरेषु सौम्यतः ।
अतो हि तीर्थाटनदानसत्क्रियाः
स्वयं भवन्त्येव जनेषु सर्वतः ॥

१७२

राज्यव्यवस्था खलु दूषिताऽस्ति,
संख्याबहुत्वं विषमूलमस्ति ।
मृतां तु जत्यादि-कुभावनां तां
संख्याऽसुरोऽद्योद्धृतवानहंताम् ॥

१७३

आंग्लेय-काले धनवृद्धिलोभः
स्वकार्यकार्याय खलूप्यते स्म ।
आंग्लेयविद्या ननु धर्मिणोऽस्मान्
विधर्मिणः प्राकुरुताऽर्थलुब्धान् ॥

१७४

अनेकदोषैः सह केचिदागताः
गुणा अपीहाऽद्य नरस्य चिन्तने ।
विज्ञानघाटीसहवासयोगतः
श्रद्धान्ध्यजाड्यस्य विधूननं शुभम् ॥

१७५

सर्वस्य वृत्यै यदि संसभाजनं
समानरूपेण तु दीयते, तदा ।
वृत्तेश्च साङ्कर्यमतो विनश्यति
वर्णस्वधर्मोऽपि सुचारु तिष्ठति ॥

१७६

विकार-मूलेन विमोहचक्षुषा
नरो हि लोके वितथं कुपश्यति ।
शुद्धे विचारे सुखभक्ति-चालिते
जागर्त्यहो निर्मल-मानवं कुलम् ॥

१७७

सह-भजनं गुरुरेतं
सह-भावं देवगतम् ।
बहु-सहजं निर्मितवान्
प्रियगोष्ठी-सम्मतिमान् ॥

१७८
देवालयेषु देवस्य पुरतः सर्वे एव हि ।
शुभ-प्रसादं स्वीकृत्य धन्यान् मन्यामहे ननु ॥
१७९
मद्य-मांसाशनं दूरे त्यज्यतां सर्ववर्णिभिः ।
प्रीत्याऽऽदरविवेकेन वर्त्यतां सर्वमानवैः ॥
१८०
"*काञ्चीपूर्णे" ननु गुरुरसौ वाञ्छयामास शेषं¹
"काञ्चीपूर्णो" न तु भवति वै रूढितो ब्रह्मवर्णः ।
कर्मक्रान्तिर्भवति सहजं सर्व-नम्रत्व-योगात् ,
किं वा साध्यं हठ-करणतः ? सर्वमस्तिप्रसूक्ष्मम् ।
१८१
शुद्धि-सौन्दर्य-वैशाल्यं ज्ञानाऽऽनन्दावपापता ।
सर्व-सेवा च सततं सहजं नम्रभावना ॥
१८२
देहातीत्व-धीरस्तु कर्मणो भावनां त्यज ।
ब्रह्मभावनया नित्यं आत्मधर्मं सदा स्मर ।
१८३
विभिन्नवर्णा अपि धेनवस्त्विमाः
विभिन्नवर्णं न पयो दुहन्ति हा !
भेदो भवेद् योऽपि च चर्मवर्मणि,
सोऽन्तर्हि नास्त्येव तु सूक्ष्ममर्मणि ॥
१८४
सूक्ष्मयोग इह वोऽस्तु नः सदा,
सूक्ष्मकार्य-कुशला वयं न चेत् ।
अल्पमेव फलमाऽऽलभामहे,
"सूक्ष्मता" भवतु मोक्ष-साधने ॥

* अयं परम भागवतोत्तमः, यः किल काञ्च्यां सदा देवराजाय चामरसेवामकरोत्, देवेन सह-सल्लापं च ।
१ भुक्त शेष प्रसाद मित्यर्थः

भक्तौ भूयादरोगता
१८५
वास्तवाऽस्पृश्यता स्यात्तु, यथाऽग्ना, वशुचौ तथा ।
मानसाऽस्पृश्यता माऽस्तु मानवे मनु-सन्ततौ ॥
१८६
शुचित्वस्य परा काष्ठा परैः संसर्गनाशनम् ।
परं तु परसम्पर्कः न नाश्यः करुणालुभिः ॥
१८७
देवस्य पुरतः पश्य सकलाऽकर्मश्यताम् ।
मूलरूपामवस्थां तां सहजां निर्मलां हि ताम् ।
१८८
आत्मसाम्यं देहभेदं यः कुर्यात् स्वविवेकशः ।
देहे देहे प्रीतिमेव ज्ञानासक्तां करोति सः ॥
१८९
अज्ञानं नाशयित्वाऽसौ सुज्ञानं तनुते महान् ।
स्वज्ञानं दापयित्वाऽसौ ह्यज्ञानं प्रहरत्यहो ! ॥
१९०
आर्थिकाऽस्पृश्यता चाऽपि त्यज्यतां सर्वमानवैः ।
आधिकाराऽस्पृश्यता चाऽपि भज्यतां सर्वकोविदैः
१९१
अस्पृश्यतेत्यक्षरार्थः
वृथाऽऽयासो न शोभते ।
परमं साम्यमारोढुं
मिथः-साम्यं सदा स्मर ॥
१९२
प्रजाप्रभुत्वे समता यदागता
देहस्य वा बुद्धिबलस्य नाऽपि सा ।
मास्त्वेव बाह्य-मभिदाऽभिदर्शनं
सर्वान्तरास्ते स्वसमानवर्षणम् ॥

१९३

सर्वत्र काले समता-गुणोऽयं
साकल्य योगेन समागतः स्यात् ।
यस्यैव नामाऽस्ति हि "साम्ययोगः"
सर्वाऽऽदरः सर्व-सुतुष्टिभोगः ॥

१९४

अगत्याऽऽपादना माऽस्युर्त्रोंधी-विट्-च्छोघनादयः
सर्वेऽपि तत् प्रकुर्वन्तु, तदैवाऽ स्पृश्यताऽत्ययः ॥

१९५

प्रार्थनां मौनसंस्तुत्या स्नेहस्थानेषु नित्यगाः ।
सूत्रयज्ञं च कुर्याम "सर्वं सङ्गत्य" मानवाः ॥

१९६

धनी, दरिद्रो जननायको न,
बह्वल्प-मूलश्च यदा न सङ्गः ।
वणिक् च विक्रेतृक एव न स्यात्,
युद्धस्य मूलं न, तदा ह्यरोगः ॥

१९७

समग्र-दृष्ट्यभावात्तु स्पृश्याऽस्पृश्ये महान् भ्रमः
सर्वतोऽपि चकास्त्यद्य विचारः प्रेमळो भवेत् ॥

१९८

ब्रह्मभावनया नित्यं, स्पृश्याऽस्पृश्यविवेकिता
जागर्त्वहो जगत्यां वै, भक्तौ भूयादरोगता

१९९

अस्पृश्या येऽपि कथ्यन्ते तेऽपि तत्र कुले स्वके
नम्रभावेन भूयासुः सदाऽऽहारपरा स्तथा ॥

२००

"हरिजन सेवा" को वाऽस्यार्थः ?
स्थूलः कथितो मथितश्चार्थः ।
"हरिजन कर्तृक सेवाऽरोग्यं"
भक्ताविदमस्त्याऽरोग्यम् ॥

२०१

ग्रामैकरस्ये व्यवहार सिद्ध्या
विश्वैकरस्ये प्रविचार सिद्ध्या ।
ग्रामस्य विश्वस्य च संजयोऽस्तु
तदैव भूयाच्च सुभक्तिवस्तु ॥

कृष्ण भक्तिः ! गान्धी भक्तिः ?

२०२

परमात्माऽपि कृष्णस्तु गोविन्देति सतां प्रियः ।
अहं त्वमिव गान्धी च, न महात्मा तदाऽऽशये ।

२०३

परत्व-सूचकं नाम न तथा रोचते प्रभोः ।
यथा हि रोचते नाम सौलभ्य-प्रतिपादकम् ॥

२०४-२०५

इयं शैली सविज्ञाना, मानवोद्धारिणी स्फुटा ।
पूज्यता-भावना मात्रं नोद्धरेत्; कृतिशून्यताम् ॥
उद्धरेद् "यत्र कृष्णोऽहं कुत्र, तेन प्रसङ्गमः" ?
एवं स्तोत्र पराधीनां जीवनीं वन्दिमागधीम् ! ॥

२०६

यच्छीलः स्वामिपादः स्यात् तच्छीलोऽहं भवा-
मि चेत् ।
तदा मे दास्य-संपूर्तिः परमं साम्यमेव च ।

२०७

प्रयोग–कुशलो भक्तः
गन्धिभिः कलहायते ।
देवशक्त्या समुत्साही
जम्बालेन न युज्यते ॥

२०८

सिद्ध्यसिद्ध्योः समो भूत्वा कार्यैकाग्रो भवेत्तु यः
स एवाऽव्यभिचारि–भक्तिमान् शक्तिमानपि ॥

२०९
कृष्णोऽपि मनुते न स्म बहुसंख्य-प्रपालनम् ।
अल्पसंख्याक पाण्डूनां विजयो धर्मसम्मतः ॥

२१०
वयं तथा धर्मपक्षे भवेम स्थिरमानसाः ।
गताऽनुगतिका भूम मा कदाऽपि सुखेप्सवः ॥

२११
केवलं स्तुतिमात्रेण कृष्णभक्तिर्न पूर्यते ।
केवलं गान्धिनाम्नाऽपि गान्धिकार्यं न पूर्यते ॥

२१२
विहाय नामाऽपि विचारचर्चां
स्वाऽऽचारनिष्ठा च यदि प्रवृत्ता ।
तदैव कृष्णः प्रिय-लास्य-हासः
निरीक्ष्य मातेव शिशून् सुखाऽऽस्यः ॥

२१३
ग्रामे ग्रामे स्वीय हस्ते स्वराज्यं
ग्रामे ग्रामे स्वीयबुद्धौ स्वविद्या ।
ग्रामे ग्रामे स्वीय-हस्ते यदार्थौ
सत्याऽहिंसे सार्वभौम्यौ भवेताम् ॥

२१४
अमरश्च तदा गान्धी, सत्या भक्तिस्तदिष्यते ।
व्यक्तिपूजाऽनवद्याऽपि शक्तिरापेक्ष्यते जने ॥

२१५
कर्तव्य-भावो ननु चेतनानां
कर्तव्य-भारः सततं प्रजानाम् ।
कर्तव्यरक्षा सहजं जनानां
यदा हि दृश्येत तदा स गान्धी ॥

२१६
अद्याऽऽगतं धैर्यमिदं जनेषु
चाऽद्यागतं साम्यमिदं फलेषु ।
पर प्रसंवेदन शीलता स्यात्,
अर्धावशिष्टं नमनं च गान्धेः

२१७
योगेश्वरस्याऽपि तु चैवमेव
ज्ञान-प्रभक्त्योः परिवर्तकस्य ।
अर्धावशिष्टं समुदायकर्म
रास-प्रगोष्ठीव जनः समेयात् !

स्वानुभूतिः
२१८
कुक्षितो नष्टः, वाक्यतो नष्टः,
मानसान्नष्टः, कार्यतो नष्टः ।
कामतो नष्टः, क्रोधतो नष्टः,
लोभतो नष्टः, मोहतो नष्टः ॥

२१९
एकतो नष्टः, सङ्गतो नष्टः ।
अर्थतो नष्टः, धर्मतो नष्टः ।
बुद्धितो नष्टः, सिद्धितो नष्टः,
[1]सूरितो दृष्टः, [2]त्वत्त एवेष्टः ॥

२२०
शठारि-नुन्नो विचरामि सर्वतो-
प्यपाय-हीनोऽहमुपाय-हीनकः ।
देवेन दृष्टा हि य एव योगिनः
तेषां मनस्येव हि मन्मनः स्थितम् ॥

२२१
अन्येऽपि पूज्या हि भवन्ति सत्यं
तथाऽपि येषां न हि दर्शनं यत् ।
तत्तादृशां काव्य-विनोद-मार्गे
नैवाऽस्ति दासस्य रुचिः कदाऽपि ॥

२२२
शून्योऽस्मि देव कृपया समलङ्कृतोऽस्मि
पादारविन्द-शरणोऽस्मि तदेकको*ऽस्मि ।

१ नम्माळ्वार, नामकात् शठकोपसूरेः
२ हे भगवन् ! त्वयैव युष्मदर्थमेव
*"क" शब्दः सुखवाची

अन्योपभोग-विमुखोऽस्मि सदा स्थितोऽस्मि
सोऽहं शठारि-मृदु-वीक्षण-भिक्षितोऽस्मि ॥

२२३

यत्राऽपि कुत्र गृहवत् सुखवासितोऽस्मि
यं क च बन्धुजनमेव सुभावितोऽस्मि ।
लब्ध्वाऽपि यत् किमपि यत्र सुतोषितोऽस्मि
नैवाप्तमित्यपि नचाऽपि च लम्भितोऽस्मि ॥

२२४

नैकक्षणेऽपि सुखदुःख-विमोहितोऽस्मि
हा ! ऽऽनन्द नित्यरसिकोऽस्मि रसार्पकोऽस्मि ।
किं वाऽस्मि ? कोऽस्म्यहमरे ! प्रभुकिङ्करोऽस्मि ॥
ब्रह्माऽस्मि तेन सुसमोऽस्मि, तदीक्षितोऽस्मि

२२५

लोकावलोकन-सुरक्षण-रक्षितोऽस्मि
साकार-देव-तनुभूत-महाजनोऽस्मि ।
मेकार-दूरकरणे पटु-मानसोऽस्मि
हाकार-लम्पट-विदूरित-जीवितोऽस्मि ॥

२२६

सर्वत्र भावित-विभूति-महारसोऽस्मि
सर्वत्र सेवित-महा-प्रभु-तोषितोऽस्मि ।
सर्वत्र वर्धित-हितप्रिय-दृष्टिरस्मि
सर्वं नतोऽस्मि विनतोस्मि विसर्जितोऽस्मि

२२७

सर्वाऽऽधारः सर्वतुष्टः सदाऽहम्
सर्वं सर्वं सर्वदा नौमि सर्वम् ।
योगं क्षेमं सर्वलोकाऽभिरामं
ध्यायं ध्यायं श्रावयामीह सर्वम् ॥

२२८

वाञ्छा-दूरो वाञ्छितार्थ-प्रलाभात्
सिद्धेर्दूरः सिद्धवस्तु-प्रलाभात् ।
कामाद् दूरः काम्यवस्तु-प्रलाभात्
लोभाद् दूरोऽनन्त-वस्तु-प्रलाभात् ॥

२२९

वाचो दूरे स्वेच्छया वाचितोऽस्मि
स्पर्शाद् दूरे स्वेच्छया स्पर्शितोऽस्मि ।
रूपाद् दूरे स्वेच्छया रूपितोऽस्मि
घ्राणाद् दूरे स्वेच्छयाऽऽघ्राणितोऽस्मि ॥

२३०

रसघन-मधुराद् दिव्यजिह्वार्थतुष्टः
करतलमधुराद् दिव्य-देह प्रपुष्टः ।
पदतल-मधुराद् दिव्य-दास्यैक-हृष्टः
भवतु जनगणस्तुष्टपुष्टप्रहृष्टः ॥

२३१

प्रतिक्षणं चाऽस्मि सुपूर्ण-मुक्तः
प्रतिक्षणं चाऽस्मि सुपूर्ण-युक्तः !
यतः सदा नूतन-नूतनेन
स्नेह-प्रपूर्णेन विलोकितोऽस्मि ॥

२३२

सर्वधर्म-गुणग्राही सर्वपुष्प-मधौ यथा ।
मधूकरः सदैवस्यामहं सर्वसुमाऽऽसवः ॥

२३३

बौद्धो भूत्वा बुद्धिमान् धर्मनिष्ठः
जैनो भूत्वा सच्चरित्रे स्वनिष्ठः ।
इस्लाम् भूत्वा सर्वभूते समानः
क्रैस्तो भूत्वा सर्व सेवा दयालुः ।

२३४

सिक्खो भूत्वाऽऽचार्य-तन्त्रो भवामि
पार्सी भूत्वाऽग्नमीळे पुरोहितम्" ।
"तावो" भूत्वा श्रेष्ठ-तत्त्वं नमामि
सर्वौं भूत्वा श्रेयसे प्रेयसेऽस्मि ॥

२३५-२३६

शैवो भूत्वा शम्भु-कार्ये प्रसक्तः
सेवे सेवे निर्विकारां विभूतिम् ।
विष्णुर्भूत्वा सर्वसाम्याऽर्चकोऽस्मि
सेवे सेवे मृत्तिकां पादरूपाम् ॥
शूद्रो भूत्वा सर्व-दास्यं करोमि
वैश्यो भूत्वा गोकुलं पालयामि ।
क्षत्रं भूत्वा प्रक्षतान् सेवयामि
ब्रह्मा भूत्वा सद्वचः श्रावयमि ॥

२३७

न वा तिथिं न वा वारं जानामि पुरुषोत्तम ।
न नक्षत्रं न वा योगं, अखण्डैकरसोऽस्म्यहम् ॥

२३८

तस्य व्रतं सर्वमिदं नृलोके
कस्याऽस्ति कृत्यं परतन्त्रकस्य ?
देवस्य पूर्णस्य परस्य तस्य
लीलैव लीला ननु पालनाऽऽख्या ॥

२३९

शेषस्य परतन्त्रस्य लाभाऽलाभौ कदाऽपि न ।
शेषिणः सुखदुःखे हि भक्त-वत्सलतादिना ॥

२४०

बाधाय लीलेति यदा नु मान्या
न भक्तिमांस्तच्चरणारविन्दे
प्राप्यत्वरा-प्रेरित एव *कश्चिद्
लीलां हि पीढां रटते कदाचित् ॥

२४१

अध्यात्म भक्ति-विज्ञान-प्रयोगाऽनुभवाऽऽदराः ।
व्यक्तिस्वातन्त्र्य विश्वाससातत्यं मम जीवनम् ॥

*आर्तप्रपन्नः आल्वार सदृशः

२४२

अविरोधः समेषां च विरोधाऽज्ञानमेव च ।
सर्वत्र बान्धवो भावः चाऽभावो मम जीवनम् ॥

२४३

भेदं भेदं न जानामि दारिद्र्यं प्रभुतां तथा ।
ज्ञानाऽज्ञानं स्मृतिं वाऽपि बहिरन्तर्भिदामपि ॥

२४४

सङ्कोचो नाऽस्ति मे वृत्तिः लोभश्चाऽपि परेषु न
सहजाऽऽदान-दानेषु प्रीतिर्भूयोऽभिवर्धते ॥

२४५

एकान्त वासे रुचिरस्ति मे सा
श्रीकान्त हासे रुचिरस्ति मे सा
लोकान्त वासे यदि स द्वितीयः
लभ्येत तत्राऽपि रुचिर्मदीया ॥

२४६

ओङ्कार घोषे रुचिरस्ति मे सदा
ओङ्कार पोषे रुचिरस्ति मे सदा ।
वेदादि घोषे रुचिरस्ति मे सदा
वेदान्त तोषे रुचिरस्ति मे सदा ।

२४७

"विपश्यना" ध्यानमतीव रोचते
नकिञ्चिदेवाप्यभिचिन्तयामि च ।
"सत्यस्य" नामाऽस्त्यपि "शून्य" मेव च
"ऋतं च "पूर्णं" यद्"हम्" भवामि च ॥

२४८

सर्वत्र सर्वत्र तदेव राजते
सर्वं च सर्वेण तदेव मोदते ।
सर्वैश्च सर्वेषु तदेव चेष्टते
ममेति कर्तृत्वमतो न रोचते ॥

२४९
देवो दीव्यन् भ्राजते सर्वलीलः
देवो गायन् नन्दतेऽमन्दलीलः ।
नाथोऽनाथान् वीक्षते मोक्षलीलः
किं किं कार्यं नैव कुर्यात् स कालः ?

२५०
दत्वा च सर्वांश्च परीक्षतेऽसौ
हृत्वा च सर्वांश्च परीक्षतेऽसौ ।
ददाति वा नेति परस्य दुःखे,
सुखायते नेति परस्य हर्षे ॥

२५१
स्वसेवां कर्तुमेवाऽसौ करणं च कलेबरम् ।
जीवकाले सुखं दत्वा मरणेऽपि सुखायते ।

२५२
अवाप्त-कामस्य किमस्ति कृत्यं ?
यथास्मदीयं न तथा तदीयम् ।
क्लिश्याम एवैव वयं तु कार्ये-
ष्वक्लिष्टकर्मा स तु मोदते हा ॥

२५३
विचित्र-वीर्यस्य समस्त-भावे
लीलेति शोधः कथनं च वेदे ।
सर्वोपपन्नं बहुधा प्रसन्नं
विचार-विस्तार-समस्त-सारः ॥

२५४
नानाप्रकाराश्च भवन्ति योगाः
नानाविधा भान्ति च देवमार्गाः ।
तेष्वत्र लीलेति यदुच्यते हा
नम्रा भवामोऽत एव लीलया !

२५५
एका वृद्धा निर्बला पादशक्त्या
हीनाऽनाथा नाथते कं च नाऽथ ।
को वा दद्यादु वेगवद्यानगामी !
कालेनेयं निर्जला मामवादीत् ।

२५६
पेयं तस्यै दापयामास लीलालीलोऽथाऽ
यं कदलि सुफलीं याचयामास दासात् ।
तच्चाप्यस्यै दापितं निष्कशून्यात् पद्भ्यां या-
त्रां सकलसगुणां निर्बबन्ध स्वलीलाम् ॥

२५७
मत् प्रार्थनामहो देवः कल्पयामास लीलया ।
निराहारवपुःपूतं मुग्धस्त्रीमरणं शुभम् ॥

२५८
रुचिर्हि देवाऽन्यगता विरोचा
यदा तु दत्ता स्वरुचौ रुचिर्मे ।
तत् त्यज्यते ऽन्यादिदं विरोचं
सुरोचमेवास्ति तदेव मह्यम् ॥

२५९
मर्त्यं घृतं त्यक्तुमयं नियुक्तवान्
दिव्यं घृतं भोक्तुमयं प्रयुक्तवान् ।
दिव्याऽमृतं तच्च तथैव सर्वं
ब्रह्मैव नाऽन्यत् प्ररुचि प्रपर्वम् ।

२६०
तेजः प्रज्वलितं मुहुर्विकसितं शान्तं रसार्द्रं हृदि
पद्माऽऽकार-विकासिनि प्रसृमरे सौवर्णसच्छा-यिनि ।
मेघश्यामनिभं विलास दयितं कारुण्यपूर्णाऽऽयतं
कान्तं कोमलमाविरस्ति किमपि क्रान्तं त्रिलोकी-महो !

२६१
उपासनाऽऽपादि विमोहनाशनं
स्वनाट्च "सम्पत् प्रभु" कोमलं पदम् ।
सुशोभनं पावनमानतोऽस्म्यहं
सनातनं सर्व-सुचेतनाऽऽलयम् ॥

काञ्चन वाहन मुक्ती

२६२

काञ्चनमुक्त्या जनता भक्तिः
वाहनमुक्त्या करुणारक्तिः
काञ्चन मुक्त्या प्रवचनशक्तिः
वाहन मुक्त्या देह सुशक्तिः ॥

२६३

काञ्चनमुक्त्या जनता क्रान्तिः
वाहनमुक्त्या करुणाक्रान्तिः
काञ्चन मुक्त्या विगता भ्रान्तिः
वाहनमुक्त्या ऽ बन्धुभ्रान्तिः ॥

२६४

काञ्चन मुक्त्या पाप विमुक्तिः
वाहनमुक्त्या ऽऽलस्य विमुक्तिः
काञ्चनमुक्त्या मनसः शक्तिः
वाहन मुक्त्या चिन्तन शक्तिः ॥

२६५

काञ्चन मुक्त्या शरणागतिः
वाहन मुक्त्या "ओमोम्" रतिः
काञ्चन मुक्त्या सुलभा गतिः
वाहन मुक्त्या त्वरिता गतिः ॥

२६६

काञ्चन मुक्त्या नैतिक शक्तिः
वाहन मुक्त्या भौतिकशक्तिः
काञ्चन मुक्त्या ऽऽध्यात्मिक शक्तिः
वाहन मुक्त्या सूक्ष्मा शक्तिः ॥

२६७

काञ्चनमुक्त्या रिक्तप्रीतिः
वाहनमुक्त्या भक्तप्रीतिः
काञ्चन मुक्त्या धनि संप्रीतिः
वाहन मुक्त्या सर्वप्रीतिः ॥

२६८

काञ्चनमुक्त्या विकृतेः शुद्धिः
वाहन मुक्त्या प्रकृतेः शुद्धिः
काञ्चनमुक्त्या संस्कृतिशुद्धिः
वाहनमुक्त्या मृतिसंशुद्धिः ॥

२६९

काञ्चन मुक्त्या भारविमुक्तिः
वाहन मुक्त्या रोगविमुक्तिः
काञ्चन मुक्त्या कार्यविमुक्तिः
वाहन मुक्त्या सहजा मुक्तिः ॥

२७०

काञ्चन मुक्त्या सुलभा भुक्तिः
वाहन मुक्त्या रुचिरा भुक्तिः
काञ्चन मुक्त्या सुभगा वृत्तिः
वाहन मुक्त्या गाढा वृत्तिः ॥

२१७

काञ्चनमुक्त्या सुलभं ध्यानम्
वाहन मुक्त्या सुलभं यानम्
काञ्चन मुक्त्या हितसंमानम्
वाहन मुक्त्या त्वमितं गानम् ॥

२७२

काञ्चन मुक्त्या भावविशुद्धिः
वाहन मुक्त्या चाऽऽयुर्वृद्धिः
काञ्चन मुक्त्या भोगविशुद्धिः
वाहन मुक्त्या योगविशुद्धिः ॥

२७३

काञ्चनमुक्त्या हृद्या विद्या
वाहन मुक्त्या सिद्धा विद्या
काञ्चन मुक्त्या सुलभा विद्या
वाहन मुक्त्या लोके विद्या ॥

२७४

काञ्चन मुक्त्या गरसंहारः
वाहन मुक्त्या पुरसंहारः
काञ्चन मुक्त्या निम्रिसंहारः
वाहनमुक्त्या सन्निधिसारः ॥

२७५

काञ्चनमुक्त्या जनहृदयम्
वाहनमुक्त्या वनहृदयम्
काञ्चनमुक्त्या हरिहृदयम् ॥
वाहन मुक्त्या गिरिहृदयम् ॥

२७६

काञ्चन मुक्त्या सुशमं याति
वाहन मुक्त्या सुदमं याति
काञ्चन मुक्त्या लोकं जयति
वाहनमुक्त्या सर्वं जयति ।

२७७

काञ्चनमुक्त्या त्वर्थकान्तिः
वाहन मुक्त्या श्रमसंक्रान्तिः
काञ्चनमुक्त्या राज्यक्रान्तिः
वाहन मुक्त्या लोभक्रान्तिः ॥

२७८

उभयविमुक्त्योर् वाचा श्रवणम्
उभय विमुक्त्योर् मनसा मननन्
उभय विमुक्त्योः कृत्या करणम्
"धन समवादे" मध्यं गमनम् ॥
दरिद्र नारायण सुप्रभातम्

२७९

ऋषिश्च "मार्कस्" आख्यमहानुभावः
"विवेक सानन्द" जगत्–परिव्राट् ।
"गान्धी विनोबा" दय एव माहुः
"दरिद्र नारायण । सुप्रभातम्" ॥

२८०

को वा दरिद्रो भवतीति वेद्यम्
सर्वेऽपिदारिद्र्य विभूषिता हा !
देवोऽद्वितीयोऽपि समैर्दरिद्रः
दरिद्र नारायण ! सुप्रभातम् ।

२८१

धनी–दरिद्रौ परकष्ट तुष्ट्योः
दरिद्र-धन्यौ च विशाल सृष्टौ ।
दया च निर्मत्सरभाव एधताम्
दरिद्र नारायण सुप्रभातम् ॥

२८२

विद्वत्सु सन्देह-दरिद्रता सा
खलेष्वसंशीति–दरिद्रता सा ।
समानविद्येऽगुणो दरिद्रता
दरिद्र नारायण सुप्रभातम् ॥

२८३

गुणस्य चाऽर्थस्य दरिद्रता वा
मा भूज्जनेष्वेव कदाऽपि केषु ।
तथैव संयोजन माविरस्तु
दरिद्र नारायण सुप्रभातम् ॥

२८४

यदस्ति यन् नाऽस्ति च दत्त तत्तत्
प्रलंभयध्वं च सुभावनातः ।
गङ्गातटे द्वाविव दातृरिक्तौ,
दरिद्र नारायण सुप्रभातम् ॥

२८५

भावस्य शुद्धि र्धनमेव चाऽस्ति
भावाऽविशुद्धिर्निधनं तदस्ति ।
परस्परं भावयतैव सर्वे
दरिद्र नारायण सुप्रभातम् ॥

२८६
समस्त दानस्य समग्रभावः
समस्त लाभस्य समग्रभावः ।
समस्तचित्ते ऽधिरोहनं हितम्
दरिद्र नारायण सुप्रभातम् ॥

२८७
राज्यस्य शक्तिर्विमली क्रियेत
साम्यप्रभावोऽपि परिष्क्रियेत ।
वर्गप्रभेदो न हि दुष्क्रियेद
दरिद्र नारायण सुप्रभातम् ॥

२८८
जागर्त्विदं सर्वमनो विशालम्
जागर्त्विदं स्वं सुख शासनं च ।
विद्याऽधि-कारो विनतेषु भूयाद्
दरिद्र नारायण सुप्रभातम् ॥

२८९
स्वैरेषु भूयाद्धितसंगमः सः
येनैव दोषा विमलीभवेयुः ।
पक्षादिवाणिज्यसुशुभ्रता स्याद्
दरिद्र नारायण सुप्रभातम् ॥

२९०
ब्रह्मा च राज्यं च समाऽऽगतं हि
पूर्वं मुनीनामिव धाम्नि, सद्यः ।
इतः-परं सत्-पथ आवृणोतु
दरिद्रनारायण सुप्रभातम् ॥

२९१
दारिद्र्यतोषः स्वयमेव चाऽस्स्तु
परेषु दारिद्र्य- सुवेदनाऽस्तु
"दारिद्र्यमूलं त्वहमेव" मस्तु
दरिद्र नारायण सुप्रभातम् ॥

२९२
अर्थोऽतिवादेन न चैव बोध्यं
साम्याऽतिवादेन न चैव बोध्यम् ।
दारिद्र्य रोगस्य निदानमाद्यं
दरिद्र नारायण सुप्रभातम् ।

२९३
सर्वोदयेनैव च बुद्ध्यते तत्
सर्वोदयेनैव च सिद्ध्यते तत्
दारिद्र्य-मूलस्य निकृन्तनं यत्
दरिद्र नारायण सुप्रभातम् ॥

२९४
जनस्यचित्ते ष्वधिरूढपूर्वं
कालुष्यमेवैव हताः स्वपक्षाः
संप्रेरयेयु न च सिद्ध्यतीदं
"दरिद्र नारायण सुप्रभातम् ॥

२९५
दारिद्र्य-निर्मूलन-दृष्टितो यत्
राज्यादिचेष्टादिक मद्य दृश्यम्
तेनैव दारिद्र्यविवर्धनं स्याद्
ददिद्रनारायण सुप्रभातम् ॥

२९६
दारिद्र्यमूलं स्वकमेव कर्म
ग्रामैः स्वराष्ट्रैः सह विश्वमेव ।
"स्वके"ति शब्दे समवैति सर्वं
दरिद्रनारायण सुप्रभातम् ॥

२९७
विश्वस्य लोकस्य सुशक्तिभूम्ना
दारिद्र्य-मूले परिशोधिताऽह्न
दारिद्र्य रोगस्य भिषक्प्रलाभः,
दरिद्रनारायण सुप्रभातम् ॥

२९८

खंडक्रियाभिर्नतु रुद्ध्यते तत्
खंडैर्न राज्यैरपि रुद्ध्यते तत् ।
ग्रामव्यवस्था बलमेधतां चेद्
दरिद्रनारायण सुप्रभातम् ॥

२९९

विनाऽतिलाभं यदि राज्यगाः स्युः
विनाऽतिलाभं यदि यन्त्रकाःस्युः ।
विनाऽतिलाभं यदि सर्वगाः स्युः
दरिद्रनारायण सुप्रभातम् ॥

३००

कणं च धान्यं च कणश्च योऽर्थः
दरिद्रमेवाप्ययतां स सार्थः ।
श्वस्त्वस्तु नूत्नं सततं प्रणूत्नं
दरिद्रनारायण सुप्रभातम् ॥

३०१

शान्तेश्वनाम्ना यदु पक्षगा हा !
त्वहिंसनं दूरत एव चक्रुः !
तदा प्रभृत्येव जनेषु हिंसा !
दरिद्रनारायण सुप्रभातम् ॥

३०२

अहिंसकाऽन्दोलन भाग-भागी
सर्वोऽपि पक्षो यदि चित्तयोगी ।
न्यायाऽऽलयो नैव च रक्षिशाखी
दरिद्रनारायण सुप्रभातम् ॥

३०३

अर्धाधिकस्वाऽऽय-सुभक्षकेऽस्मिन्
सेनाविभागे यदि तिष्ठतीह ।
कथं हि दारिद्र्यनिकृन्तनं स्याद् ?
दरिद्रनारायण सुप्रभातम् ॥

३०४

अर्थे च कार्ये च समत्वमस्तु
चोत्पत्तिदानेऽपि समत्वमस्तु ।
मूले कुठारोऽस्तु सुदृष्टिरस्तु
दरिद्रनारायण सुप्रभातम् ॥

एक देवतोपासनम्

३०५

आकाशात् पतितं तोयं यथा गच्छति सागरम् ।
सर्वभूतहिता सेवा केशवं प्रतिगच्छति ॥

३०६

सागरादुद्गतं तोयं यथा वर्षति सर्वशः ।
केशवस्य नमस्कारः सर्वभूतानि पुष्यति ।

३०७

तरुमूलाऽऽप्यायितं तोयं यथा गच्छति शाखिकाः
कारणस्य नमस्कारः सर्वं कार्याणि गच्छति ॥

३०८

कारणं तु सदा ध्येयं कार्यं च वशवर्ति तु ।
एक विज्ञान विज्ञाने सर्वं जानाति मानवः ॥

३०९

सर्व-विज्ञान-विज्ञानादेकं याति न संशयः ।
यानबिन्दुभिदा मात्रं, स्वाधिकार-विवेकिता ॥

३१०

एकं तमात्मान, मिमांश्च सर्वान्
अङ्गानि जोघुष्यति वेदवाक् सा ।
दृढं त्विदं ज्ञानमये सुमुख्यं,
अन्यत् सखे ! सर्वमसारसख्यम् ॥

३११

एकं देव सर्वदा यो ह्युपास्ते
तस्यैवाऽयं सूक्ष्म-निष्कर्ष एवम् ।
देवान्नान्यं सत्-पथं नाऽपि भोग्यं
जाने जाने, नैव जाने, न जाने ॥

३१२

"अनित्यत्वं" "तदन्यत्वं" स्वाश्रये यद् भवेद् विषम् ।
द्वावपीमौ न तद्-भक्तौ, नित्यताऽनन्यताऽमृतम् ॥

३१३

पत्नी स्वभर्तृतोऽन्यस्मिन् यांचते चेन्न शोभते!
देवेऽपि च सुखं स्वार्थं याचते चेन्न शोभते ॥

३१४

आश्रये च फले चैव मार्गतोऽपि सदैकवान् ।
एक-दैवत-भक्तो हि सदा सन्तुष्ट एव च ॥

३१५

स्वोपास्य-भिन्नेष्वनुपाय-निष्ठा ।
स्वोपास्य-भिन्नेष्वनुपेय-निष्ठा ।
तदेक-मार्गत्व तदेक-भोगौ
द्वयी सुभक्तिः परिपक्वभूता ॥

३१६

अनन्य-भक्तौ फलमेकमेव,
ह्यनन्य भक्तौ शरणं तदेव ।
उपाय ऐक्यं स्वफले तदैक्यं
ऐकान्त्यबुद्धौ निकषैक्यमेवम् ॥

३१७

क्षणे क्षणे भिन्न-पथेषु यानं
क्षणे क्षणे भिन्नफलेषु गानम् ।
स्थिरस्वभावस्य यदा स्वभावः
नाऽहं न चाहं परभक्त एव ॥

३१८

सन्मार्ग भिन्नेष्वनुपायता-धीः
सत्याद् विदूरेऽप्यफलत्व-धीश्च
प्रियाद् विदूरे त्वगतित्व-धीश्च
त्रिवेणिकेयं परभक्तिभूपा ॥

३१९

अवान्तरे चाऽपि फले प्रभिन्ने
मुख्याऽऽभिमुख्यं यदि न त्यजामः ।
आयुर्गुणाः वृष्टि-सुभिक्षताऽऽदि-
लोकार्थकामाः न हि भक्तिगेयाः ॥

३२०

अनन्यभक्तिं जानाति त्वनन्यपुरुषोत्तमः ।
योऽन्तरात्मा समेषां च सदाऽह्यस्मत्परोऽपि च ॥

प्रपत्तिः

३२१

मनः-स्थिति, धातु-साम्यं, शारीरी स्वस्थता यदा
तदा हि विश्वरूपस्य, तथैवाऽजरस्य या स्मृतिः

३२२

मरणे, भगवानेव स्मृत्वेमां स्वयमेव ताम् ।
नयत्यस्मान् परगतिं काष्ठपाषाणसन्निभान् ॥

३२३

प्रपत्तेः सार एवाऽयं, सापि भूयाद् गुरोर्मुखात् ।
गुरोरप्रतिबन्धस्तु सदा स्यात् सैव मे स्थितिः ॥

३२४

मनःस्थिति र्योगसाम्याच्
छारीरी तु निसर्गतः ।
सर्वसेवैकरत्या हि
विश्वरूपस्य संस्मृतिः ॥

३२५

निराऽऽकारोऽपि साकारः
कथमेतद्विचित्रता ?
श्रुणु वत्स ! स एवाऽस्ति
विश्वाऽऽकारो जगत्-तनुः ॥

३२६

अजत्वज्ञानमेतत्तु सूर्योदय इवाऽस्तु ते ॥
सदैव भासमानस्याऽप्यभिव्यक्तिस्तदुच्यते ॥

३२७

"अजायमान एवाऽसौ बहुधाऽपि विजायते ।"
अस्माकं जनिनाशायाऽप्यजहत् स्वस्वभाववान् ॥

३२८

"प्राप्तिपूर्ती" गुणावेतौ कथ्येते देवगौ शुभौ ।
विश्वरूपेण संबन्धो ऽजत्वेनाऽलिप्तता तथा ॥

३२९

धर्मे प्रपत्तिं स्वीकुर्मि, साधने योगसाधनम् ।
आरोग्ये प्राकृतीं रीतिं, जीवने सर्वसेवनम् ॥

३३०

अन्त्यत्रयं प्रपत्तावेवान्त्यमेयान् न संशयः ।
योग्यप्रपत्तिरेवेयं सर्वेषां देहधाणिाम् ॥

३३१

पूर्णा समर्पणी चैषा शरणागतिरङ्गगा ।
न्यासविद्या मुमुक्षेयं, स्वतन्त्राऽपि गुरोः
कृपा ॥

द्वय निष्ठा

३३२

साधनं फलमेवं च ब्रह्मैव न परं क्वचित् ।
"द्वयार्थ निष्ठा" चैवं चेत् सर्वभक्तिसरस्वती ॥

३३३

अनन्योपेयतानिष्ठा ऽप्यन्योपायं सहेत किम् !
सहेताऽपि त्वरा चेत्तु, "गोदा" माताऽत्र संमतिः

३३४

महादुर्गा यथा गोप्यः कृष्णसंश्लेष कामनाः ।
*"आंड ळ्देवी" तथा चेयं मन्मथं शरणं गता ॥

*विष्णुचित्त नामकस्य द्रविड ' पेरियाल्वार् सूरेः"
भू·ल्बा कन्या, सैव "गोदा" । 'सैव आंड ळ्"
* अस्याः "तिरुप्पावै" कृतिः अन्या "नायकी श्री
सूक्तिः" अथवा 'नाय्च्चियार तिरुमोळि' इति । तत्र द्रष्टव्यम्

३३५

इयं त्वरा भक्तिकार्या, हाऽन्योपाय प्रचोदिका ।
नाऽस्माकं तादृशी भक्तिः इदानीं वर्तते यतः ॥

३३६

अन्योपाय-कथा दूरे तदाऽऽस्तां च प्रमोहिनी ।
अन्योपाय-प्रसङ्गेऽस्मच्छुद्धोपेयं च भज्यते ॥

३३७

साधने बीजरूपेण यत्तदेव फलेऽपि च ।
तस्मादशुद्धमूलेभ्यः फलं शुद्धं न लभ्यते ॥

३३८

येन केन प्रकारेण द्रव्याऽऽर्जनमथाऽपि तु ।
सुखशान्तिरहो नाऽस्ति सुखं न्यायादुपार्जिते ॥

३३९

'न्यायाऽऽर्जितस्य वित्तस्य पात्रे वितरणं मतम् ।
दानशब्दार्थ' इत्येवं 'रामानुज-सुदर्शनम्' ॥

३४०

अन्योपेयार्थमपि चेत् क्षीयते साधनं शुचि ।
क्षुद्रेष्वनिष्टदुष्टेषु फलेषु शिवसाधनम् ॥

३४१

दुष्टसाधनमार्गेऽपि प्रोत्सुकान् कुरुते जनान् ।
कालक्रमेण तत्, सन्तं संस्कारं विकरोति च ॥

३४२

फलं क्षुद्रं, क्षुद्रसङ्गं वर्धयित्वाऽथ पातयेत् ।
अनेकेषां सतां लोके क्षुद्रभक्ता भवन्ति हि ॥

३४३

सङ्गदोषो महाव्याधिः रङ्गेऽप्यध्यात्मसंज्ञके ।
अन्यभक्तिरतस्त्याज्या, त्वनन्या भक्तिरिष्यताम् ॥

३४४

कुपथोऽफले नेता
कुफलं सुपथाच्च्यवि ।

सुपथः सुफलं चैतद्
अर्थद्वयमपेक्ष्यताम् ॥

३४५
अन्योन्यपोषके त्वेते परस्परसुरक्षके ।
पवित्रसाधनान्नित्यं सत् फलं नियतं भवेत् ॥

३४६
पवित्रफलदार्ढ्येन सिद्ध्यत्येव सुसाधनम् ।
क्रमेणाऽऽत्यन्तिकं चेति भक्तिसंस्कार इष्यते ॥

३४७
अन्योपायं न सहते त्वरा चेदपि वर्तते ।
शठजित् प्रमुखाश्चैते ह्यत्र वै स्वनिदर्शनम् ॥

३४८
ज्ञानस्य स्वाङ्कुशे भक्तिः नाऽस्ति चेत् सहते-
ऽन्यकम् ।
ज्ञानस्य प्राङ्कुशे भक्तिः अस्ति चेत् सहते कथम् !

३४९
तथाऽपि लोकक्षेमाय द्वयनिष्ठा गरीयसी ।
अनन्योपायता चैका ध्यनन्योपेयताऽपरा ।

३५०
अन्योपाय बलेनाऽऽढ्याः
ऋषयः प्राप्नुवन्त्यपि ।
भगवन्तं बलांशे च
न ग्राह्या द्वयनिष्ठितैः ॥

३५१
अनन्योपायतां प्राप्य चोपेयान्तर-लक्ष्यकाः ।
संसारिणः फलांशे च न ग्राह्या द्वयनिष्ठितैः ॥

३५२
साधनादन्य एवाऽस्ति साध्यं नैवं भवेच्छृणु ।
कार्यकारणयो र्भेदः नैवास्ति जगतीतले ॥

३५३
शुद्ध-साधनमार्गेण शीघ्रं प्राप्यं प्रलभ्यते ।
अशुद्ध-साधनेभ्यश्च क्लिष्टसाध्यं, नु लभ्यते ?

३५४
परविश्वासमान्द्यं च स्वाहङ्कारस्तथैव च ।
अस्माकं च ऋषीणां च त्रिद्ध्यशुद्धी उभावपि ॥

३५५
सूक्ष्माहङ्कारमुक्ता हि सूरयः सन्त एव तु ।
यस्माद् देवेन संदृष्टाः निर्हेतुक-कृपालुना ॥

३५६
अनन्योपेयशक्त्या हि चाऽन्ते शुद्धं प्रलभ्यते ।
अविलम्ब-फलैकान्त्यं मुनीनां नास्ति संमतम् ॥

३५७
द्वयनिष्ठागरिष्ठानां इदं-देहावसानकम् ।
मुक्तैश्वर्यं, तथा निष्ठा बहुशः स्तूयते ननु ॥

३५८
अनन्योपायशक्त्या हि त्वनन्योपेयेषु कांक्षिणाम् ।
अनुभूय च तान्यन्ते भगवत्-प्राप्तिरिष्यते ॥

३५९
एकैकनिष्ठा चेच्चाऽपि द्वयनिष्ठां तनोति वै ।
एकैकनिष्ठा चेन्नाऽपि गुरुकारुण्यतो भवेत् ॥

३६०
विना विलम्बं सौख्येन स्वरूपं यदि रक्ष्यते ।
*सिद्धसाधन-कैङ्कर्ये सदाचिन्त्ये गुरोर्बलात् ॥

३६१
देवकारुण्य-पात्रत्वं चैतदर्थद्वयं स्मृतम् ।
द्वयनिष्ठा-स्मृतिश्चेत्तु तदैव हि फलोदयः ॥

३६२
द्वयार्थ मन्त्रस्य सुलम्भनार्थको
धावत्ययं[1] दूरगमेव तं[2] गुरुम् ।
गुरुः स चापि त्वित एव धावति
तं मन्त्र मेवाऽर्पयितुं सुपात्रके ॥

*सिद्धोपायभूतः ईश्वरः, तत् सेवाच
१ श्री रामानुजः २ "पेरियनम्बि" गुरुम्.

३६३

गुरोः शिष्यस्यचाऽद्वैतं दानाऽऽदान-प्रभावनम् ।
धेनोर्वत्सस्य चेवेह "मधुरान्तक" सङ्गमम् ॥

३६४

सदा रम्या द्वयी चाऽसौ शुद्धसाधनजीविनाम् ।
कैङ्कर्यनिरतानां च शतशोऽथ कथास्त्वथ ॥

३६५

मातुर्योगाद् भवति मधुरो वत्सलो हृत्सखो यः
सर्वाऽऽधाः प्रणतसुभगः स्वाम्यसौलभ्य शीलः ।
तस्यैवाहं चरणकमले प्राऽऽश्रये साधनार्थं
श्रीमाञ्छेपो भवतु मुदितः किङ्क्रियाः संस्करोतु

३६६

गोविन्द नामा गुरुसार्वभौम-
भ्राता यदाऽऽप्तिगृहान् निनाय ।
कूरेशपुत्रं शिशुभट्टकं द्वयाऽऽ-
रव्येनैव मन्त्रेण गुरुं जगाम ।

३६७

अपृच्छतैवैष गुरुर्मुदा तदा
"द्वयस्य मन्त्रस्य कथं सुगन्धिता !
व्याप्नोति सर्वत्र, कियानहो रसः !
स्थाने कृतं बालकयोगरक्षणम्" ॥

३६८

दूरदेशाद् यदा कोऽपि स्वसमीपं गत स्तदा ।
रामानुजो ब्रवीति स्म."किं वा दद्यां! द्वयंश्रुणु"

३६९

समस्तापराधे द्वयार्थस्मृतिश्चेत्
समस्तं प्रपापं भयाद् धावतीति ।
सदा स्याद् यदस्मिन् भवाब्धौ निमज्जज्-
जनानां महापातरूपं "द्वयं" तत् ॥

३७०

रक्षायां नहि किञ्चिदस्ति बलदं मन्त्रदमुष्माद् द्वयात्
सर्वे भक्तमना वदन्ति तमिमां स्वीयानुभूतिं मुखात् ।
पूजायां द्वयमन्त्रतोर्ध्वंशकलात् नारायणेति वै
श्रीमच्छन्दसहायतो ननु भवेत् सर्वा समाप्तिः शुभा ॥

३७१

मन्त्ररत्नेति नामासौ द्वयमन्त्रो सदाऽधरे ।
अन्तरेऽपि स्फुरत्येव सर्वाऽऽचार्ये स्वभावतः ॥

३७२

"श्रीमन्तौ हरिचरणौ समाश्रितोऽहं"
एतद् वै वररुचिरं सुखात् प्रदृश्यम् ।
"यद्द्वौ" हरिचरणौ श्रिया समाढ्यौ,
रस्यार्थं भजत नराः ! समाश्रयध्वम् ॥

३७३

कर्पूरधूलीसुखवासिता चेत्
जिह्वा यथा स्वादुसुबन्धुरा स्यात् ।
मुमूर्षुकर्णे द्वयमन्त्र एष तु
महान्तमानदमहो ददाति ॥

३७४

"बहूनां जन्मनामन्ते ज्ञानवान मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सु दुर्लभः" ॥

इति तिरुनारायणपुरम् अरैयरदासस्य कृतिषु
स्वानुभूतित्रिवेणी नामकजीवनोज्जीवनकाव्ये
भक्तिसरस्वती नामकः तृतीयः सर्गः

१ यदा समाश्रयितुं काञ्चिपूर्णेन सूचितः, श्रीरंग क्षेत्राऽभिमुख. रामानुजः कांच्याः प्रतस्थे, पेरियनम्बि महापूर्णऽपि" रामानुजं द्वयमन्त्रेण संस्कर्तुं कांचीपुराऽभिमुखः प्रतस्थे । समाने काले उभयोः मेलनं मधुरान्तक नाम क्षेत्रे मध्ये समभवत् । तत्रैव मन्त्रदीक्षामपि. रामानुजः प्राप ।

अथ स्वानुभूतित्रिवेणी· नामक जीवनोज्जीवनकाव्ये

## ताम्रपर्णीप्रसाद नामकः चतुर्थः सर्गः

१

भक्तेश्च योगोऽपि न साधनात्मा
दासस्य पापीयस एव पापान् ।
दृष्ट्वा दयार्द्रेग च यः प्रदत्तः
स गृह्यते "ताम्रनदी प्रसादः"

मधुरभावकल्पम्

२

रज्जुनिबद्धं मधुरं तत्वं
तेन सुबद्धो मधुरतरस्त्वम् ।
कृष्णः पूर्णः पापविकोपी,—
त्वं तु सुपूर्णस्त्वकृतःकोपी ॥

३

प्रह्वो भूत्वा "कुरुकापूर्णः" !
जिह्वोच्चारण एवं त्वेत्र ।
ब्रह्माऽऽनन्दः प्रापित एव
विह्वलशरणं चाऽसि त्वमेव ।

४

देवो देवस, त्वमसि सुदेवः
देवो दृष्टस्त्वहह त्वदीयः ।
त्वत्तो देवं नाऽन्यं मन्ये
त्वत्—कृतितोऽन्यां नाऽहं मन्ये ।

* 'ताम्रपर्णी नदी यत्र कृतमाला वयस्विनी" इति भागवतवचनेन, तमिळ्नाडु दक्षिणे वर्तमाना नदी । तस्याः तीर एव "आळ्वार तिरुनगरी" दिव्यदेशः । यस्य नम्माळवार, शठकोपसूरेः कलेरादौ अर्थात् ५०८० वर्षेषु जन्म अभूत् । तस्य प्रसादः इत्यर्थः

५

दयया पूर्णस्त्वमिहोदारे
भवसि च पर्वत सौधविहारे ।
अयि खलु मां त्वं क्षणमपि वाऽरे
वियोक्तुमर्हसि नैव शठारे ॥

६

वैदिकगर्ह्यः सोऽहं पतितः
परमकृपाळो ! त्वमसि सु तातः ।
मातः ! स्वामिन् स्नेहप्रभातः
त्वचिराद् दासश्चतुरीकृतः ॥

७

दृष्ट्वा दृष्ट्वा मां तु सुतापम्
हृत्वा हृत्वा पूर्व-कुपापम् ।
कृत्वा कृत्वा प्रेमप्रतापम्
यत् त्वत्-कृत्यं लोक वितापम् ॥

८

भगवत्-कृपया दृष्टामेनाम्
स्वीयकृपातः स्पष्टामेनाम् ।
प्रपन्नजनताः पुष्टामेनाम्
प्राप्य प्रहृष्टाः शिष्टामेनाम् ॥

९

गीतसहस्रीं त्वत्-कृतिमेनाम्
पूतसहस्रीं सामश्रुतीनाम् ।
पोतसहस्रीं जन्ममृतीनाम्
पातय कर्णे शान्ति-रसानाम् ॥

१०

सर्वपदेषु च चारं-चारम्
सर्वमनःसु च वारं वारम् ।

सर्वत एतत् प्रातः-सायम्
सर्वजनेषु च गायं गायम् ।

११

वैदिक-वेदस्याऽऽन्तर अर्थे
स्थापितवन् ! मां यशसः पूर्ते !
त्वत् पद-सेवा-सुमहत्यर्थे
आशा सफला परम-पुमर्थे ॥

१२

वयं तु निष्फल जीवा एव
तथाऽपि कुरुषे सत्-फलमेव ।
कोकिल-कलकल-मुखरित एव
कुरुका-नगरे दीक्षित एव ॥

१३

प्रेमल जनता-प्रेम सुमूर्तेः
कुरुकापुरिका-पूर्ण-सुकीर्तेः ।
यो मनुजः किल संवदतेऽर्थे
पदवी परमा तस्य हृत्पूर्ते ।

*वकुळभूषणषट्कम्

१४

स्वयमेवाऽऽगतश्चन्द्रान् मंडलाकारमास्थितः ।
हसन् ददर्श यो मां तं वन्दे वकुल-भूषणम् ॥

१५

कटाक्षैस्तादृशैर्दिव्यैः सर्व-पापानि, मोचयन् ।
आस्ते च सुचिरं यस्तं वन्दे वकुल भूषणम् ॥

१६

इङ्गितेन समाज्ञाप्य गोष्ठी-दर्शन-कांक्षणम् ।
पूरयन्तं तदाप्याऽऽशु वन्दे वकुल-भूषणम् ॥

१७

आस्थां प्रकटयामास "मधुरस्य कवेः" श्रुतौ ।
श्रवणेन च सन्तुष्टं वन्दे वकुल-भूषणम् ॥

*स्वाभाविक वकुळमालाङ्कृतत्वात्" नम्माळ्वार" सूरेः "वकुळभूषणः" इति नामान्तरम् ।

१८

चिञ्चां शेष-स्वरूपेण पार्श्वे च "मधुरं" श्रितम् ।
दर्शयामास यः प्रेम्णा वन्दे वकुलभूषणम् ॥

१९

स्निग्धावलोकनं मौनं स्फुरणं स्फूर्तिकारणम् ।
मन्दस्मितं च यस्याऽभूद् वन्दे वकुलभूषणम् ॥

२०

सततं योऽनु-सन्धत्ते षड्भिर्वकुलभूषणम् ।
अस्याऽभिनानपात्रं सः प्राप्नुयाद् वैष्णवीं श्रियम्

वकुळ भूषण द्वादशी

२१

लसन्मुखं प्रसन्नाऽक्षं कारुण्यामृतवर्षुकम् ।
स्वर्णच्छाया-जटा-जूटं वन्दे वकुलभूषणम् ॥

२२

निराहारतपः-पूतं देवाहारभुजं सदा ।
सदाहारं सदाभोग्यं वन्दे वकुल भूषणम् ।

२३

नवनीतमुषं स्मृत्वा नवनीताऽतिकोमलम् ।
अविनीतेः प्रहर्तारं वन्दे वकुलभूषणम् ॥

२४

चिञ्चामूले समाऽऽसीनः सञ्चालयति यः प्रभुम् ।
मञ्चायमानं देवस्य वन्दे वकुलभूषणम् ॥

२५

मनसा ब्रह्म संश्लिष्टं दिवारात्रमथाऽपि च ।
बाह्येन्द्रियैश्च विश्लिष्टं वन्दे वकुलभूषणम् ॥

२६

सावलम्बं निरालम्बं नीहारे नीरवे रवौ ।
सुखदुःखसमाहारं वन्दे वकुलभूषणम् ॥

२७

पद्मासनोपविष्टं तं पद्मावल्लभकौतुकम् ।
सद्माऽद्वितीयं भक्तानां वन्दे वकुलभूषणम् ॥

२८
स्वानुभूतिप्रकर्षं तं सानुग्रहमचीकरत् ।
द्राविडेषु प्रबन्धेषु वन्दे वकुलभूषणम् ॥

२९
संसारगर्तघोरत्वं कंसारौ विनिवेद्य च ।
१"श्रीवृत्त" कारिणं*मारं वन्दे वकुलभूषणम् ॥

३०
भगवद्रूपवैचित्री चित्रमालेव दर्शिता ।
२"तिरुवाशिरिये" येन वन्दे वकुलभूषणम् ॥

३१
उत्साहि मनसा देवेऽभिनिवेशं निरूप्य च ।
३"बृहदन्त्यादि" कर्तारं वन्दे वकुलभूषणम् ॥

३२
नारायणस्य चरणौ वृङ्क्त्वोपायं "सहस्रके"
कैङ्कर्यं प्राप यो नित्यं वन्दे वकुलभूषणम् ॥

३३
"श्रीशैल" "वेङ्कटगुरूत्तम" पोषितेन
"यद्रद्रि-नायक" सुगायक किङ्करेण ।
निष्काञ्चनेन विरवद्यजनाऽऽश्रयेण
गोष्ठचर्पितं वकुळभूषण-षट्कयुग्मम् ॥

वकुळ भूषण-चतुःश्लोकी

३४
परेषां गुण-सम्पत्तिं मम दोषानुदर्शनम् ।
दिने दिने वर्धयन्तं वन्दे वकुलभूषणम् ॥

३५
निराऽऽहारे महत् प्रीतिं वर्धयन् यः सदा स्फुरन्
परितस्तस्थिवांसं तं वन्दे वकुल–भूषणम् ॥

* मारन" इति शठकोपसूरेः वकुलभूषणस्य पितृ नाम। तस्यपुत्रं इत्यर्थः । १ २ ३ इदंसर्वं तस्य प्रथम, द्वितीय तृतीय दिव्य प्रबन्धानां नाम ।
४"श्री मुख सहस्त्र गाथा" नामके "तिरुवायमोळि" दिव्य प्रबन्धे चतुर्थे इत्यर्थः

३६
भुजयोर्मम शीर्षे यश्चोपविश्य हृदासने ।
सदा मां प्रेरयतीव वन्दे वकुल-भूषणम् ॥

३७
अनिरीक्ष्य गुरुर्दृष्टः, तथैव स्वामिकिङ्कराः ।
यत्-प्रसादफलं मन्ये वन्दे वकुलभूषणम् ॥

३८
चतुःश्लोकीं पठेद् यस्तु शठारेरुत्तमामिमाम् ।
मुमुक्षु-जीवनं प्राप्य मोदते यावदात्मकम् ॥

प्रार्थना-षोडशी

३९
पत्रशाकफलाऽऽहारो भूयासं यावदायुषम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

४०
अन्नादि-कोश-शुद्धोऽहं
भूयासं यावदाऽऽयुषम् ।
प्रार्थनां सार्थयन्तं मे
वन्दे वकुलभूषणम् ॥

४१
निष्किञ्चनो नित्यतृप्तो भूयासं यावदायुषम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल–भूषणम् ॥

४२
सहजं पादसञ्चारी भूयासं यावदायुषम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

४३
कारुण्यलोकसङ्ग्राही भूयासं यावदायुषम्
प्रार्थनां सार्थयन्तं मे वन्दे वकुलभूषणम् ॥

४४
सत्यप्रेमकृपाशीलः भूयासं यावदायुषम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

४५
स्वधर्मे निधनं प्राप्ता भूयासं सौख्यलीलया
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

४६
परमार्थप्रपत्ताऽहं भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुलभूषणम् ।

४७
आचार्यस्य कृपापात्रं भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे बकुलभूषणम् ॥

४८
लोकमातुः कृपापात्रं भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुलभूषणम् ॥

४९
लोकनाथकृपापात्रं भूयासं यावदात्मम् ।
प्रार्थनां साथयन्तं मे वन्दे वकुल भूषणम् ॥

५०
अनन्यशेष एवाऽहं भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

५१
अनन्योपाय एवाऽहं भूयासं यवादात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

५२
अनन्योपेय एवाऽहं भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल भूषणम् ॥

५३
सत्वशुद्धः परं द्रष्टा भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुलभूषणम् ॥

५४
सर्वसेवैकरतिमान् भूयासं यावदात्मकम् ।
प्रार्थनां सार्थयन्तं मे वन्दे वकुल-भूषणम् ॥

५५
प्रार्थनाषोडशीं नित्यं यः पठेत्, सहसा सः ।
सत्यसङ्कल्पतां प्राप्य शुद्धिं सिद्धिं च यच्छति ॥

शठारि गीताष्टकम्

५६
कमलाऽऽकारे हृदयाऽऽगारे
कलिसन्तारे दुःखविदूरे
त्वदलङ्कारे सुखसम्पूरे
मैव त्यज रे स्थाहि शठारे ।

५७
शुद्धाऽऽहारे निर्मलासारे
स्वान्ताऽऽगारे लुलितविकारे ।
एकाऽऽकारे बन्धविदूरे
मैव त्यज रे स्थाहि शठारे ॥

५८
कलकलपूरे दिव्याऽऽधारे
मलतो दूरे सुमसुकुमारे ।
शयनाऽऽगारे मनआधारे
मैव त्यज रे स्थाहि शठारे ॥

५९
वेणुविनोदननादप्रपूरे
किङ्किणिझेङ्कृत-चित्त सुपूरे ।
माया माधुर- नर्तन भारे
मैव त्यज रे स्थाहि शठारे ॥

६०
सर्वसुचेतन--ताराऽऽधारे
सर्वविमोचन--नीलाऽऽधारे
सर्व सुशोभन-दहराऽऽधारे
मैव त्यज रे स्थाहि शठारे ॥

६१
स्फूर्तिप्रसारे कीर्तिविदूरे
*पञ्च सुमूर्त्या पूरितपारे ।
आर्त्यवतारे हृदयप्रतारे
मैव त्यज रे स्थाहि शठारे ॥

* पर, व्यूह, विभव, अन्तर्यामि, अर्चारूपया

६२
चञ्चलदूरे विषय-विदारे
कञ्चुकिताखिलजगदाधारे ।
मञ्चोद्-भासित--चित्ताऽऽगारे
मैव त्यज रे स्थाहि शठारे ॥

६३
देवाऽऽहारे हाससुपूरे
सद्‌गुरुनिर्मितधाराऽऽकारे ।
मन-आकारे प्रियकासारे
मैव त्यज रे स्थाहि शठारे ॥

६४
शठारिसारे गीतापूरे
गाहत नीरे पापविदूरे ।
अष्ठकूधारे लोका वाऽरे
अमृताऽऽसारे रमत सदा रे ॥

शठारि पद मङ्गलम्

६५
शठारि-पद्भ्यां मङ्गलमस्तु
कठोरभावान्मोचनमस्तु ।
कुठारकार्याच् च्यावनमस्तु
हठाच्च सत्-पथजीवनमस्तु ॥

६६
भगवत्-सुहृदे मङ्गलमस्तु ।
जगतः सुहृदे मङ्गलमस्तु ।
जगदीश्वर ते मङ्गलमस्तु
भगवज्जगते मङ्गलमस्तु ॥

६७
कृष्णोपाये मङ्गलमस्तु
तृष्णाकाये मङ्गलमस्तु ।
कृष्णोपेये मङ्गलमस्तु
विष्णोः पेये मङ्गलमस्तु ॥

६८
पिङ्गलजटिने मङ्गलमस्तु
मङ्गलवपुषे मङ्गलमस्तु ।
तुङ्गवरासिने मङ्गलमस्तु
भृङ्गविभूषिणे मङ्गलमस्तु ॥

६९
सौम्यविलोचन मङ्गलमस्तु
रम्यवरानन मङ्गलमस्तु ।
काम्यदहस्त ! मङ्गलमस्तु
साम्यद- रूप ! मङ्गलमस्तु ॥

७०
लङ्घनकर्त्रे मङ्गलमस्तु
सङ्कोच्छेत्रे मङ्गलमस्तु ।
रङ्गोद्‌गात्रे मङ्गलमस्तु
तुङ्गोद्‌घर्त्रे मङ्गलमस्तु ॥

७१
रञ्जन-चतुरे मङ्गलमस्तु
भञ्जनदूरे मङ्गलस्तु ।
कुञ्जविहारे मङ्गलमस्तु
सञ्जयशूरे मङ्गलमस्तु ॥

७२
मननसुधीरे मङ्गलमस्तु
जनन-विदारे मङ्गलमस्तु ।
तनन-विहारे मङ्गलमस्तु
जनतोदारे मङ्गलमस्तु

७३
शठारि-पदयोर्मङ्गलमेतत्
शठाऽपनयने साह्यमियात् ।
हाठाच्च भगवति मानसमेयात्
शठारि-मुनिवत् पाकमयेत् ॥

### राम रामानुज प्रार्थनाषट्कम्

७४
अन्तःशान्तिर्बहिःशान्तिः शान्तिद्वयमपेक्षितम् ।
त्वमेव करुणासिन्धो तत् प्रयच्छ महाप्रभो ॥

७५
क्रियते स्वयमेवैषः शान्तिभङ्गः पुनः पुनः ।
अशान्तौ रुचिरद्याऽपि वर्तते मे महद् भयम् ॥

७६
"भयकृत्" त्वमिह प्रोक्तः त्वमेव "भयनाशनः।
वृद्धाऽऽचार-परित्यागः मा भूद् गृध्रनिषेवणम् ।

७७
ज्ञात्वा ज्ञात्वा क्रियेताऽद्य यन्मया रघुनन्दन ।
त्वमेव सर्वभूतेभ्यो ह्यभयं दातुमर्हसि ॥

७८
विशेषतस्तु मह्यं तत् क्रियतां यमिनां वर ।
रामानुज कृपासिन्धो ! मायामेनां तरामि यत् ॥

७९
प्रदेहि शान्तिं शान्तिं तां सर्वशान्तिं जगद्गुरो ।
येनाऽहं कान्तिमापन्नः सदा स्यां त्वत् पदाम्बुजे॥

श्रीरामानुज उवाच—

८०
"स्वयं कृताऽपराधश्च स्वयमेव विपह्यताम् ।
भोगात् पुण्यं गतं वत्स ! दुःखात् पापं गतं गतम्

८१
अत्याऽऽहारविहाराभ्यां दूरे तिष्ठ महाव्रत ।
मनसा वचसा स्यातां कदाऽपि क्रियया नहि ॥

८२
प्रार्थनाषट्कमेवैतत् प्रार्थनापूरकं मतम् ।
एवं प्रार्थनमप्येतद्गुरुदेव कृपाकृतम् ॥

### यतिराजाष्टकम्

८३
दन्तसिंहासनाऽऽरूढः दन्तिनां वादिनां हरिः ।
किरीटेन प्रमुक्तोऽपि श्रीशपादकिरीटवान् ॥

८४
स्वपादुके भक्तगोष्ठी-जनतानम्रमूर्धसु ।
हितस्स्पर्शे सुखस्पर्शे योजयामास हा गुरुः !

८५
आन्दोलिकाऽऽरूढ-यतीश्वरोऽयं
तापाऽधिरूढं जनमादिदेश ।
"पश्यन्तु गन्धाक्तमिदं स्वरूपं
स्वस्त्यस्तु तापाद् विगता भवन्तु" ॥

८६
लीलाविभूतिं त्रिपदाविभूतिं
करेण धृत्वा कटकच्छलेन ।
"विभूतियुग्मस्य वितारणेऽहं
सिद्धोऽस्मि सर्वे त्वरतेति बोधः" ?

८७
"सर्वे शब्दाः पूर्णमेवाऽऽहुरन्ते
त्वग्रे स्थूलं सूक्ष्मजीवं ततश्च ।
'सर्वे वेदास्तत्पदं ह्याऽऽमनन्ति'
चर्चाः सर्वाः निष्फला बुद्धिमूलाः ॥"

८८
इदं प्रमेयं गुरुणा ह्यदर्शि,
समग्रवेदस्य समन्वयोऽयम् ।
अद्वैतमेवाऽस्ति गुरोर्मतं तद्
वेदेषु सन्दर्शितमेव यच्च ॥

८९
स्थूलं स्थूलं जीवशरीरं
सूक्ष्मं सूक्ष्मं देवशरीरम् ।
सर्वस्याऽऽत्मा नारायणः
चैवं सत्यं मिथ्या भेदः ॥

९०

यतिराजाष्टकमिदमति-धवलं
सततं मधुरं भावय विपुलम् ।
किं वा किं वाऽसाध्यं जगति ?
मनुकुलमेव मुक्तिं व्रजति !

श्रीपादतीर्थ-दशकम्

९१

* "सालिग्रामे" सुकरं भोग्यं, सालिग्रामे सकलाऽऽरोग्यम्
सालिग्रामे नृहरेर्भाग्यं, श्रीपद-तीर्थं पिबत सुभोग्यम् ॥

९२

गुरपद-तीर्थं रम्यं गम्यम्
गुरुपदतीर्थं सौम्यं नम्यम् ।
गुरुपद-तीर्थं गलितं मम्यम्
गुरुपद-तीर्थं परमं साम्यम् ॥

९३

श्रीपादतीर्थं परमं पवित्रम्
श्रीपादतीर्थं सकलाऽऽपदस्त्रम् ।
श्रीपादतीर्थं "वटुकाऽऽर्य" मित्रम्*
श्रीपादतीर्थं जगदेक-सत्रम् ॥

९४

श्रीपाद तीर्थं करणप्रशुद्धं
श्रीपादतीर्थं वचसः प्रशुद्धम् ।
श्रीपादतीर्थं हृदयप्रशुद्धम्
श्रीपादतीर्थं सकलाऽऽत्मशुद्धम् ॥

* कर्णाटके मैसूर मंडले एतन्नामक क्षेत्रे, रामानुजश्री पादतीर्थसरःअस्ति । जैनानामपि तत् तीर्थक्षेत्रम्

* सालिग्रामनगराधिपः स्नानकाले कावेर्यां नद्यां रामनुजैः स्नातपूर्वजलप्रवाहे स्नात्वा वीतकुष्ठरोगो भूत्वा रामानुजस्य अत्यन्तान्तरङ्ग शिष्योऽभूद् यः, तस्य वटुकनम्बीति नाम ।

९५

श्रीपादतीर्थं सकलाऽभिषेकः
श्रीपादतीर्थं त्वमृताऽभिषेकः ।
श्रीपादतीर्थं विमलाऽभिषेकः ॥
श्रीपादतीर्थं विरजाऽभिषेकः ॥

९६

श्रीपादतीर्थं जनिनाशनौषधम्
श्रपादतीर्थं मृतिनाशनौपधम् ।
श्रीपादतीर्थं मतिसाधनौषधम्
श्रीपादतीर्थं गतिसाधनौषधम् ॥

९७

श्रीपादतीर्थं भुवनाऽभिवन्द्यम्
क्षीपादतीर्थं त्वमराऽभिवन्द्यम् ।
श्रीपादतीर्थं शिरसाऽभिवन्द्यम्
श्रीपादतीर्थं मनसाऽभिवन्द्यम्

९८

श्रीपादतीर्थं श्रुतिसंविजृम्भणम्
श्रीपादतीर्थं स्मृतिसंविजृम्भणम् ।
श्रीपादतीर्थं करुणा-विजृम्भणं
श्रीपादतीर्थं कृति-संविजृम्भणम् ॥

९९

श्रीपादतीर्थं गुरुपापतारकं
श्री पादतीर्थं गुरुगर्व-तारकम् ।
श्रीपादतीर्थं गुरुसत्वशोधकं
श्रीपादतीर्थं गुरुभक्ति-दायकम् ॥

१००

श्रीपादतीर्थं सकलं सुदिव्यम्
श्रीपादतीर्थं सकलं सुभव्यं ।
श्रीपादतीर्थं सकलं सुहव्यं
श्रीपादतीर्थं सकलं सुकव्यम् ॥

१०१

श्रीपाद-तीर्थदशकं बहु तैर्वरेण्यं
येत्वत्र तत्र सभयं प्रथमं शरण्यम् ।
उत्तीर्य, संचरमपर्वमयं हिरण्यं
संप्रार्थयन्ति परमं हरिणा वरेण्यम् ॥

१०२

विश्वासशक्तिरतुला सुखमेधते हा
मानुष्य-भक्तिरतुला सुखमेधते हा ।
मर्त्यस्य दिव्यगमने सुखसाधनं हा
दिव्यस्य मर्त्य-गमने सुखसाधनं हा !

अम्बा पञ्चकम्

१०३

करुणाऽऽ लोक-सम्पत्तिं मातर्देहि निरन्तरम् ।
त्वत्कटाक्षैकलक्ष्याणां दुर्लभं सुलभं भवेत् ॥

१०४

त्वमेव माता लोकस्य सर्वदा सर्वथाऽपि च ।
सिञ्च सिञ्च महातल्लि ! शीतलं तापनाशनम् ॥

१०५

अमृतं पाययाऽद्यैव बाधां शोधय देहगाम्
त्वत्कराणां म्रदिम्नैव प्रेमपुष्कलया दृशा ॥

१०६

त्वत्प्रदत्त-महाभोजी ह्याऽऽरोग्यं प्राप्नुयामहम्
कारयाऽद्यैव शुद्धं मां देहे वाचि मनस्यपि ॥

१०७

त्वदङ्के शयनं मेऽस्तु
महाघोरान्धतामसे ।
पतिताऽशक्तबालस्य
त्वं सदा शरणं मम ॥

१०८

अम्बायाः पञ्चकं नित्यं यः पठेत् तापनाशनम् ।
मातुः प्रेमलसंस्पर्शं भजते तत्-करऽशनम् ॥

देवी त्रय रहस्यम्

१०९

अहेतुककृपापात्रं भूयासं सर्वमङ्गले ।
यदस्ति पापमेशेषोऽयं त्वत्कृपाऽगाधताकृते ॥

११०

यथा तथावाप्यस्त्वेतत् त्वमेवाऽसि जगत्त्रये ।
सञ्जीवनकरी माता दोषाणां दूरधावने ॥

१११

दोष-स्वीकरणं लक्ष्म्या न "कश्चिन्नापराध्यति" ।
इति संबोधनं पत्यौ युक्त-वाचा निवारणम् ॥

११२

क्षमा भूम्यां विशेषोऽयं अस्वीकृत्यैव दूषणम् ।
प्रथमा साहि महिषी 'ह्री' नाम्ना श्रुतिसंमता ॥

११३

ततोऽपि च विशेषोऽयं
नीळया भोग्य-भूतया ।
क्षमा-प्रसङ्गो नाप्येत
भोगं दत्वा श्रियःपतेः ॥

११४

शठकोपादिसूरीणां दर्शने सततं त्रयम् ।
देविकानां, स्फुरच्चाऽस्ति वेदगुह्यं सनातनम्

११५

देवीत्रय रहस्यं तु यः सदा संस्मरेदनु ।
"श्रीभूनीळा" समेतस्य सायुज्यं समवाप्नुयात् ॥

सम्पत् कुमार पञ्चदशी

११६

परित्यक्तजायाऽसुतस्वीयशोकं
प्रमार्ष्टुं यतीन्द्रः कृपासिन्धुरेषः ।
परं ब्रह्म बालस्वभावं विचिन्त्य
"स्व-सम्पत् सुपुत्रं" विवव्रे पवित्रम् ॥

११७

सुफालं सुनासं सुहासं सुभासं
सुकस्तूरिकान्तं मुखं संदधानम् ।
विलासिभ्रु नेत्रं सुमृष्टं कपोलं
किरीटं च लक्ष्मीं पदे हृत्प्रदेशे ॥

११८

स्वचक्रं स्वशङ्खं स्वकौमोदकीं च
भयाऽभावमुद्रां स्वहस्तै र्दधानम् ।
तुरुष्केन्द्रकन्या-विमोहैकपात्रं
स्वपुत्रं सुभक्त्या विदामास योगी ॥

११९

स्वभक्तानपुत्रान् नैव सोऽयं सहेत
तदर्थं "कुमारं" सावधानेन रक्ष्यम् ।
प्रदाय स्वपत्यं सौम्यरूपं च नित्यं
कलौ "यादवाद्रौ" साधुरक्षार्थमाह ॥

१२०

शास्त्रं तु जानाति सुपुत्रकं तं
यतीन्द्रसम्पत् सुकुमारमेव ।
लोके कियन्तोऽपि सुता भवेयुः,
पुत्रैषणां त्यक्तुमतो ब्रवीति ॥

१२१

सम्पत्कुमारो हि यतीन्द्रपुत्रः
सर्वेषु गेहेषु स एव पुत्रः ।
जातोप्यजातः "प्रियजानकिप्रियः"*
यद्वद्रिनाथो यदुवंश-सेव्यः ः ॥

१२२-१२३

सर्वाङ्गकोमलं वन्दे सर्वाभरणभूषणम् ।
पार्श्वदर्शनतन्वङ्गं सुन्दरात् सुन्दरं शिशुम् ॥
सर्वदेवमुखं रम्यं अतिशेतेऽतिरम्यकम् ।
सम्पत् कुमार-पृष्ठं हि दिगम्बर-सुदर्शनम् ।

* रामप्रिय इत्यर्थः, यतः रामेणाऽपि आराधितेयं मूर्तिः ।

१२४

श्रीरङ्गे" पादविन्यासः "वेङ्कटे" ऽपूपकं बृहत् ।
काञ्च्यां "छत्रं" च महितं, यादवाद्रौ "किरीट-
कम्"*

१२५-१२६

श्रीरङ्गे प्राणभूतोऽयं "श्रीपाणो "मुनिवाहनः ।
"कुरुम्बरत्ते"ति पूर्णोऽसौ वेङ्कटाचल जीवनम् ॥
"काञ्चीपूर्णो" मुनिः काञ्च्यां देवराजस्य वल्लभः
"नारायणो" नामं बालो यादवाद्रौ हरिप्रियः ॥

१२७

"प्रसादपावनी पूरी" "वेङ्कटं तीर्थपावनम्"
कथ्यते "यादव क्षेत्रं " पतितानां प्रपावनम् ॥

१२८

"चण्डालसुन्दरश्चे" ति गीयते कालतः प्रभुः ॥
ब्रह्मोत्सवे कृपाशील रामानुजवशंवदः ॥

१२९

तादृशोत्सवनित्यत्वं वाञ्छद्भिश्च पुरातनैः ।
"अमात्याऽऽचार्यवर्यै" श्च प्रार्थितं चाऽस्तु सर्वशः

१३०

"तात्ताद्दक्षगजेन्द्रमोक्षणरथारोह क्षणस्वर्धुनी-
तीर्थाऽध्यक्षग-पूर्वपर्व-महिते यस्मिन् यतीन्द्राज्ञया
आमातङ्गवसिष्ठमेति जनता मुक्तैकरस्यां श्रियं
सोऽयं प्रत्यमहस्तु वज्रमकुटी दिव्योत्सवो वा-
त्सरः ॥"

१३१

अद्वैतं हि यथा त्रिशिष्टमभवद् रामानुजेन स्फु-
रत्
"काञ्चीपूर्ण" दया-प्रबुद्धमतिना विच्छिन्नसं-
शीतिना ।

* प्रतिसंवत्सरं मीनपुष्ये, संपत्कुमार श्रीनक्षत्रे धार्य-
माणा या वज्रमकुटी, तन्महोत्सवः मेलुकोटे क्षेत्रे
प्रवर्तते ।

एवं "बालकुमार" सङ्गतिमता बाल्याऽऽत्त संस्कारतः
नूनं "देहलि" पत्तने प्रभुरसौ 'सम्पत्कुमारी"-कृतः ! ॥

१३२

श्रीरामानुज-सम्पत्तिं
चैवं कुमारकं दिव्यम् ।
नयनाऽऽरामं रम्यं
सततं भावय परं गम्यम् ॥

नृसिंहैकादशी*

१३३

नृसिंहमूर्ते बहुसिंहमूर्ते
प्रह्लादरक्षार्थ-सुलक्ष्यमूर्ते ।
हिरण्य-दुहृत्-प्रविदारि-मूर्ते
मनो मदीयं भव विश्वमूर्ते ॥

१३४

सन्तापशान्तिं कुरु योगमूर्ते
योगस्य शक्तिं दिश सर्वमूर्ते ।
सर्वेषु भक्तिं भर भक्तमूर्ते
भक्तिं सदा बर्धय लोकपूर्ते ॥

१३५

पुन्नाग-चाम्पेय-महा-सुगन्धे
सुदीर्घ "हंगर" दृढकाष्ठपूते ।
पातालगाहि-प्रबिल-प्रखाते
सन्तोषतो ध्यायसि नागपूते ॥

१३६

परां हि भक्तिं त्वनुसन्ततां हरे
ततोऽपि काष्ठां परमां च भक्तिगाम् ।
त्वमेव नः साधय, साधनं भवान्,
त्वत्-पारतन्त्र्ये त्वभिषिक्तका वयम् ॥

१३७

वाणिज्ये रुचिरस्ति सर्वजनतास्वेवं च राज्ये भ्रमः
स्वार्थस्यस्याऽऽर्जनमेव मुख्यमधुना नेतृत्वलोभस्तथा ।
लोभाधीनमिदं हि सर्वपतनं पापं नराणां हरे
लोभाच्यावय वर्तयाऽद्य सुपथे सर्वोदयेऽकंटके ॥

१३८

प्रह्लादबालान् विरचय्य साधून्
सदा समस्तानमलानभीरुन् ।
त्वदीयविद्योर्जित-वैभवांस्तान्
हिरण्यविद्याविमुखान् कुरु त्वम् ॥

१३९

राज्येषणात्यागिन एव लोकान्
तथैव यूनश्च भवत्प्रकामान् ।
त्वदीय चित्रार्पिसचित्तवृत्तीन्
त्वदीयगानाऽभिमुखान् कुरु त्वम् ॥

१४०

बालरक्षाप्रवीण त्वं बालशिक्षारतो भव ।
सर्वत्र वर्धमानां च नीतिबालिशतां हर ॥

१४१

स्वधर्मनिरतान् बालान् स्वधर्मैकप्रियांस्तथा ।
स्वधर्मनिधने शक्तान् नृसिंह ! कुरुताद् भवान्

१४२

योगाऽऽसनस्थो हि विराजते भवान्
जिह्वां प्रसार्याऽपि च राजसे महन् ।
हिरण्यपक्षं ननु कोपवह्निमान्
मनो विपच्याऽऽस्व समत्वयोगवान् ॥

१४३

सर्वेषु धीशक्तिमये नुदस्व
संसार-बन्धे प्ररुचिं हरस्व ।

*कर्णाटक "नागमंगल" क्षेत्रस्था नृसिंहमूर्तिः दासस्य कुलदेवता ।

त्वदीय–सेवार्थमिदं भजस्व
मृत्योश्च मृत्यो ! सततं जयस्व ॥

१४४

नृसिंहैकादशीमेनां यः पठेद् भक्तिभाग्यवान्।
सर्वसन्तापमुक्तोऽसौ मनः प्रह्लादमेयिवान् ॥

केशव द्वादशी *

१४५

द्वारि तिष्ठति शिवस्य पुत्रकः
"केशवस्य" परिरक्षणव्रतः ।
क्लेशनाशकरणेऽनुशक्तकः
सैन्यनायकसभा-सुकोविदः ॥

१४६

व्यष्टिसृष्टि-चतुरश्चतुर्मुखः
व्यष्टिनाश-चतुरस्त्रिणेत्रकः ।
येन दर्शित-पथौ च वैष्णवौ
तं नमामि "वरसौम्यकेशवम्" ॥

१४७

अन्धं तमः पिण्डितमेव यत् कृतं
लोके समस्तं तत एव निर्मितम् ।
यस्य प्रियासंस्कृतकेशकुन्तलम्
तमेव पश्यामि सदाऽनु केशवम् ॥

१४८

पूर्वस्यां दिशि योऽवते जगदिदं चक्री सदासुन्दरः
स्वर्णाऽऽभश्चतुरास्यलम्भितवपुश्चाऽऽगस्त्य-
सस्थापितः ।
भूलोके फणिराजमंडलतले सर्वैर्मुदाऽऽसेवितः
सोऽयं प्रत्यहमस्तु लोचनगतस्तुङ्गोज्वले
गोपुरे ॥

१४९

उषस्युषसि सायं त्वां पञ्चकाल-परायणाः ।
शान्तिभक्ता"नमाजेन"हाऽऽह्वयन्ति परं प्रभुम्॥

१५०

नानादेवतया सदैव रमया संसेवितांघ्रिश्च यः
सर्वैः पुण्यसुतीर्थ-तोयनिवहै र्माधुर्यमाबिभ्रता ।
कूपेनाऽपि च भव्य "भ्रातृ गुरुणा" रामानुजा-
र्येण तच्
चक्राऽभिन्न नृसिंहकेन हनुमद्वीरेण चाऽऽस्ते
भवान् ॥

१५१

दूरसुदूरात् कुसुमाऽऽहरणः
नित्यनवीनैः सेवितचरणः
दिनदिनमेव च चित्रौदनः
शालिभिरावृतपुष्कलधनः ॥

१५२

चतुरश्रे नगरेऽस्मिन् चतुराभिः सकलाभिः ।
जनताभिः सुखबद्धो गृहसविधे फलहारी! ॥

१५३

चक्राऽऽकार सरो हि सुन्दरवरं प्राचीप्रदेशे तव
पश्चात् केसरियोगिरक्षितगिरिः सौवर्णरत्नाऽऽकरः।
ईशान्ये विमलः पयोनिधिरहो सिंहाचलो
वेङ्कटः नैऋत्ये च तथोत्तरेऽप्सु शयन ! ह्यापो
निधी कल्पितौ ॥

१५४

सुन्दरवंशी नाद विनोदम्
यमुनातीरे विहरणमोदम्
प्रणमत पार्श्वे सुखचरणम् ।
लक्ष्म्याऽऽलीढं नर–केसरिणम् ॥

१५५

दक्षिण वीथ्यां सीतारामं
तत्तत्रैव दैवतबृन्दम्

* इयमपिकेशवसूर्ति नागमंगलस्था

पश्यत वश्यत तद्बन्धम्
केशवलोचन-भ्रूबन्धम् ॥

१५६

केशवद्वादशीं दिव्यां
यः पठेद् भक्तिभाववान् ।
देवतासार्वभौमेण
सदैवासौ सुरक्षितः ॥

नारायणैकादशी*

१५७

श्वेतोर्ध्वशोभा तिलकायमाना
कर्पूरधूली, मुखकालिमानम् ।
विवर्धयत्येष च तैललेपः
कपोल-कान्तिं कमनीकरोति ॥

१५८

मुखारविन्दाद् रुचिरात् सुवृत्तकात्
ऊर्ध्वं, सुमूर्ध्नः रुचिराद्धस्तकात् ।
हा ! मालिका ! कर्णकपोल-भेदिका
त्वन्या द्विपार्श्वे बहुधा रसाधिका ॥

१५९

कटीलसद् दिव्यपटी विशाला
साऽऽमूर्धमाला ऽऽ चरणं विलोला
हृद्यल्पमालाः भवदीयदाराः
पादेऽपि "बीबी" तुलसी-प्रसारा ॥

१६०

त्यक्त्वा समस्तं कवचं च बाह्यं
मुक्त्वा च भारं सरलोऽसि देव ।
मुधा किमर्थं वहनीयमेवं ?
भोगानुकूल्यं कुरुषे जनानाम् !

*"मेलुकोटे" क्षेत्रस्था, श्रीमन्नारायण मूलमूर्तिः ।

१६१

वनेऽपि पूर्वं रघुराम सर्वाः
विसृज्य भूषाः ननु शोभसे स्म ।
स्मृत्वा तदेतद् यदुगिर्यधीश !
पुनः प्रियो मारुति-तोषणार्थः ?

१६२

स्वरूपगाः साधुकलाः सुदृष्टाः
वपुः सदा भाति निरस्तदोषम् ।
स्वरूपतः सोऽयमिहाऽऽगतोऽसि
श्रितेषु वात्सल्यधुगाऽऽवृणोषि !

१६३

यदेव रूपं त्वविकारि सत्यं
तदेव कृत्वाऽप्यजहत्-स्वभावम् ।
प्रेम्णा प्रभूम्णा मनुसन्ततीनां
भावाऽनुगो भौत इवाऽऽविरासीः ॥

१६४

तथाऽपि भौतं न च युष्मदीयं
कथं त्विदं रूपमहो बिभर्षि !
अप्राकृतं केवलमेव तच्च
बिम्बाऽऽकृतिस्वात्मसमानबिम्बे ॥

१६५

दिव्येन रूपेण समान-रूप
दिव्येन गन्धेन समान-गन्ध ।
"ऋतं" तदेतत् प्रकरोपि "शून्यं"
"पूर्णं" हि "सत्यं" हृदयप्रसख्यम् ॥

१६६

पूर्वं सदाऽऽचार्यसमागमे त्वं
यथाऽसि शैले वृषशैलनाथ ।
तथैव रूपं धृतवानहो नु !
यद्वाद्रिनाथाऽद्य मदीदृशानाम् ॥

१६७

"गोदाशठार्यो" रभवत् सुगानं
चैकादशीहस्तदिने क्रमेण ।
त्वत्पादगन्धं तुलसीसुपत्रं
कर्पूर-तीर्थं जनहस्त-पात्रम् ॥

१६८

एकादशीं बन्धुर-भावबन्धां
इमां च नारायणगां समेत्य ।
सर्वे समाऽऽकीर्तयताऽह्नि सायं
स्वरूपमेतच्छरणाऽऽ गतानाम् ॥

कल्याणी विंशतिः

१६९

कल्याणी स्फूर्तिदात्री सकलजनताभूरिभाग्यैक-
सूत्री
प्रादक्षिण्ये प्रवीणेष्वहह सुलभं जन्मनश्छेददात्री
वाराह-स्वेदजे ! त्वं भवसि शरणं पत्युरन्ते प्रणेत्री
मातेवाऽस्मत्सुवोग्र्री महिततपसामासनस्थैर्य-
दात्री ॥

१७०

कल्याणी पञ्चगङ्गा सुरसरिदमला क्षीरधारा
प्रजानां
आयुर्वृद्ध्यै यदर्हं परहितजनकं तादृशं स्थानमेव
मातेवाऽऽक्रम्य दैवी, गृहगतविरसां मानसीं
देहगां च
तां तामार्तिं प्रबाधां परिहरसि सदा लोकक-
ल्याणबद्धा ॥

१७१

सान्निध्यं भक्तभाग्यं त्वविकलसरितामातनोषि
प्रदेवि !
गङ्गादीनां च गम्ये ! प्रणमनसुभगे क्षीरवार्धेः
सुनीते
तस्माद् देवाऽधिदेवो मुहुरभिगमनो यात्रया
संनिधाय
वारंवारं स्वलीलां प्रतनुत इह वै प्लावनात्
स्नानतश्च

१७२

अपत्य-दारिद्र्य-निवारिणी त्वं
भीत्यादि-शङ्का-परिहारिणी त्वम् ।
स्थलीयपुण्यार्ह-पुराण-शैली
यस्यास्तटे श्रूयत एव काले ॥

१७३

कल्याणीनामिका या या
नारी वर्तेत भूतले ।
सा सा जाता तवैव श्री-
कल्याणमनसा शुभे ! ॥

१७४

सर्वेषां च त्यागपात्री त्वमेव
रत्नादीनां पूर्णपात्री त्वमेव ।
सर्वेषां च प्रेमपात्री त्वमेव
सर्वाधारा पूतपात्री त्वमेव ॥

१७५

विवाहकाले तव नीरमेव
सुमङ्गला गेहमहो नयन्ति ।
पूजां च कृत्वा विभव-स्वनास्ताः
वाद्यादिघोषेण सुसम्भ्रमेण ॥

१७६

शुभाऽशुभे कारुणिकाऽसि देवि
प्रियाऽप्रिये भूरिदयाऽसि देवि ।
"युगादि" तुल्या गुडनिम्बदात्री
सर्वस्य लोकस्य हितप्रदात्री ॥

१७७

पाकस्थली पावन-होम-काली
देवर्षिसन्ध्या-पितृतर्पणाळी ।
कन्या-प्रदानार्थ-विवाह-केली
नृसिंहशैली-मुकुर-प्रशैली ॥

१७८

सर्ववृद्धिकरे देवि नमस्ते सिद्धिदायिनि ।
सर्वशुद्धिकरे मातः सर्वकल्याणि ते नमः ॥

१७९

चतुरश्रा सुखदृश्या बहुरस्या लोकस्य ।
गुडखण्डा बृहतीव कल्याणी महतीह ॥

१८०

कति वा कति वा कालेन
कति वा कतिवा मूलेन ।
कति वा कति वा लोकेन
गतिरिह लब्धा सौख्येन !

१८१

यतिराजां यतनाऽऽशे भक्तानां भवनाशे ।
भिक्षूणां सुखवासे ! जप्तॄणामुपवासे ॥

१७२

मीनमासि च हस्तर्क्षे नारायण इहाऽऽगतः '
यदा, तदा मुनिश्रेष्ठाः कल्याणं जगतां जगुः ॥

१८३

कल्याणनामर्षि-तपः-प्रभूमिः
शुकाम्बरीषादि-समाधि-भूमिः ।
"सुशीलया" तत् "सुचरित्र" भूमिः
तीर्थाऽतिगामित्व-लय-प्रभूमिः ॥

१८४

रामानुजार्यस्य विहार-भूमिः
रामानुजार्यस्य विचारभूमिः ।
रामानुजार्याऽऽनन-पुण्ड्रभूमिः
तीर्थाटकानां पदतीर्थ-भूमिः ॥

१८५

आद्याऽपि दृश्यते स्तम्भे, सता परमयोगिना ।
येन स्नानं च सन्ध्या च निर्वृता, तस्य विग्रहः

१८६

कदाऽपि तद्देह अहो नु सर्पः
यज्ञोपवीतायत अद्य दृश्यः ।
रामानुजार्यस्य पुरावतारः
शेषो महानत्र कृतावतारः ॥

१८७

नृसिंहशैलादवरोहकाले
वृत्तं हि श्रुत्वा गुरुरेवमाऽऽह ॥
"चोल"स्य राज्यं तु यदा समाप्तं
"कल्याण" नामाऽप्यभवद् यथार्थम् ॥

१८८

सोपान-पङ्क्तिः सुरलोक-दुर्लभा
समत्वविन्यास-सुबन्ध-निर्मिता ।
राज्ञा "बृहत कृष्ण" सुनामधारिणा
गिरेः पतित्वाऽपि च यो न बाधितः ॥

१८९

चतुस्स्तम्भशोभी जलाऽऽरोधकारी
बृहत्-स्तम्भमध्ये सुरक्षार्थकाष्ठः ।
द्वितीयः शिलाऽऽढ्यो द्विपादस्तथैव
महावीर-लङ्घ्यावुभावत्र साक्षात् ॥

१९०

नृसिंह-वाराह-जपस्य निर्वृतिः
सदाऽपि चाऽत्रैव सुखायते ननु ।
मौनस्य भूमौ खलु मौनमेधते
नमोऽस्तु पूर्वेभ्य अहो बलं ! नमः ॥

१९१
कल्याणीविंशतिं नित्यं भो भो भजत मानवाः ।
सर्वकल्याणसंसिद्ध्या ध्रुवा भवति संस्मृतिः ॥

स्व नैच्य नैवेद्यम्

१९२
श्रीमन् धीमन् गुहावासिन्
क्रीडन् मोदन् नवो भवन् ।
स्वामिन् भूमन् गुणिन् मोहिन्
रूपिन् आत्मन् महन् शुचिन् ॥

१९३
मालिन् ज्वालिन् अहन् ब्रह्मन्
रोचिन् प्रापिन् प्रधारयन् ।
दासमल्पं निर्गुणं मां
संमोहं कर्मरूपिणम् ॥

१९४
अनात्मगुण-सम्पन्नं
कृपया त्वाऽऽत्मसात्कुरु ।
अशुचिं तेजसा हीनं
काळरात्रिं विरोचनम् ॥

१९५
स्वनैच्य नैवेद्यमिदं समर्प्यताम्
दिने दिने, दोषबुभुक्षिते हरौ ।
अग्नेः प्रसंयोग-वशाद् बलादिव
काष्ठं ज्वलत्-पाप-पवित्रितो भवान् ॥

वेङ्कट नाथाष्टकम

१९६
भार्यायाः प्रातिकूल्याद् "यतिवर' कलितां
नाऽऽप सन्यासितां यः
भार्याया आनुकूल्यात्, न विहितविरागी
"पिळ्ळैलोकार्यवच" ।
गार्हस्थ्ये भ्राजमानो गुरुगत-मनसा
श्रौतमेवाग्निकार्यं
नित्यं दाधार सैषो नरपतिकनकाद्
दूरनान् वेङ्कटार्यः ॥

१९७
कटाक्षपात्रं गुरुदेवतायाः
बाल्येऽपि जग्राह समस्तविद्याम् ।
न वा झटित्येव बहिर्जगाम
कीर्त्यादिकामस्तप एव तेपे !

१९८
को वा युवा स्याद् वद लोककेऽस्मिन् ?
साधुर्युवाध्यायक एव भूत्वा ।
जनाभिमुख्यं न हि वाञ्छते हा !
तथाऽपि तीक्ष्णो व्रतिनां वरिष्ठः ॥

१९९
तार्क्ष्यदेवतादर्शनात् ततो
मन्त्रलाभतो, हयमुखान्ननु ।
सिद्धिमाप्य वै, तदनु कर्तृतां
दर्शनादिषु प्राप्तवानसौ ॥

२००
तपःप्रभावेन गुरोर्मुखात् सः
गुरोर्गुरौ संयमिसार्वभौमे ।
महत्स्वनिष्ठां यतिराजराजे
कृत्वा न भारं कमपि प्रमेने ॥

२०१
आयुर्वर्षशते य एष सुकृती पुत्रार्थमेवैव च
त्वेकं वारमपूरयत् पितृऋणोन्मोचाय पत्न्यां
रतिम् ।
तत्राऽऽयातमिदं मधोर्मधुतरं संन्यासतोऽ
प्युत्तमं
हा हा ! चैव सुवर्णिता ननु बभूवैवैवम-
त्युत्तमा ॥

२०२
समस्तधर्माऽऽकरमूर्तये नमः
समस्तविद्याऽऽकरमूर्तये नमः ।

समस्तवैराग्यधराय ते नमः
समस्तसख्याय च ते नमो नमः ॥

२०३

समस्तकल्याणगुणाऽऽकराय
समस्तशास्त्रार्थमहार्णवाय ।
समस्तनम्राय नमो नमस्ते
घंटावताराय नमो नमस्ते ॥

२०४

वेङ्कटनाथस्याष्टकमेतद्
भावयतीह च यो वै तत्तत् ।
तुङ्गोत्तुङ्गं प्राप्य स एव
विहरति गुरुपदसेवक एव ॥

*वरार्यवर्य गोष्ठी

२०५

हृत्पुण्डरीकसुभगोऽसि वरार्यवर्य
मद्दृष्टिपूर्वमहहा दयसे महार्य ।
वात्सल्यपूर्ण-नयनाऽब्ज-कटाक्षसौम्य
मात्सर्य-दूर मकरोः सकलान् नियम्य ॥

२०६

*वेदान्तदेशिक गुरूत्तम-सारवेदिन्
वेदान्तसार-सुखरूप-जले निमज्जन् ।
शास्त्राऽऽतप-प्रबलवानपि शीतलाऽऽत्मन्
ज्योत्स्नाऽधिकोऽसि जगतां यतिराज राजन् ॥

* एकादश द्वादश शतमानयोः यः रामानुजः आसीत् स एव पुनरपि चतुर्दश शतमानेऽपि एनदूवरवर मुनि रूपेण तमिळदेशे "आल्वारतिरुनगर्या" मवततार । अयमेव अन्तिमाऽऽचार्यः इति परम वैदिका मन्यन्ते ।

*अयं वेङ्कटनाथः त्रयोदशशतमाने काञ्च्यामवततार । कवितार्किकसिंह इति प्रथितः । स एव वेदान्तदेशिकः

२०७

सर्पाऽऽकृतिर्ननु भवानत एव सर्पं
रम्याऽऽकृतिं च वहसे शिरसोर्ध्वभागे ।
मूलाऽऽकृतेस्तव सुवक्षसि चैवमेव
मालाऽऽढ्य-दर्शनमिदं दयसे जनानाम् !

२०८

गाथा-सहस्र-युगळ-द्वय-गानलोल
गोदाग्रगण्य-यतिराज-पदाब्ज-शील ।
कावेरिका -तट -विभूषणरङ्ग-धाम्नः
आधावको यदुगिरौ गुरुदर्शनाऽर्थिन् ॥

२०९

अतो नु नित्यं त्वनुभावपूर्ण
सुरम्यजामातृस्वरङ्गनाथम् ।
हे रम्यजामातृमुने स्वपार्श्वे
यद्वद्रिनाथं कुरुपैक-पार्श्वे !

२१०

मुखे शमश्चक्षुषि रम्यता सा
तवाऽऽसने स्थैर्यमथो तवाऽऽस्ये ।
"द्वय"स्य संस्फूर्तिरये त्रिदण्डिन्
गुरोरयं भाति सदाऽञ्जलिस्ते ॥

२११

त्वमेव दैवं परमं पवित्रं
त्वमेव गम्यं परमं सुमित्रम् ।
त्वमेव पापस्य दृढं लवित्रम्
त्वमेव सर्वं भगवत्-प्रसत्रम् ॥

२१२

गुरुपददोषं प्रशमं गमयन्
चरमगुरो त्वं सर्वान् नमयन् !
"गुरुरयमेको यतिपतिरेको
नाऽस्ति ततस्त्विति" सत्यं कथयन् ॥

२१३

चरणौ शरणं कलये तरणं
चरमं गुरुपदमेतद् भरणम् ।
कलिमलमरणं त्वमितं करुणं
जगदुद्धरणं भगवद्-चरणम् ॥

२१४

नैकसंख्या गुरोः पङ्क्तिरेकमालाऽऽयते शुभा
एकस्मिन् परमे सर्वे ह्यन्तरर्गच्छन्ति साधवः ॥

२१५

तथैकगुरुसान्निध्ये त्वतिरेकनिराऽऽग्रहे ।
सकलं सच्चिदानन्दं ह्यात्मसाद् भवतीह शम् ॥

२१६

उच्चैःस्वराणां व्यतिरेकतोऽपि
स्पष्टाऽक्षरा स्निग्ध-गभीर-वाणी ।
गोष्ठी गरिष्ठा वरयोगिराज
श्रेष्ठाऽमराणां परिषद्-विशिष्टा ॥

२१७

"यतिराट्" "पादुके" चैव त्रिदण्डिर्गृहिरूपतः
यतिराडवतारस्य तव गोष्ठी-विभूषणम् ॥

२१८

वरार्य वर्य-गोष्ठ्यां या
सहजा नम्रभावना ।
सा पुनाति नरं सत्यं
त्वन्तराय-निवारिणी ॥

चरम सुपर्वम्

२१९

खण्डन मण्डन राहित्यम्
सर्व-दया-सुख-साहित्यम् ।
गुरु-करुणाऽमित-पात्रत्वम्
अर्थ-मही-रति-शत्रुत्वम् ॥

२२०

दुष्ट-मनो-नति-सामर्थ्यम्
शिष्ट-मनो-गति-सारथ्यम् ।
रङ्गे धामनि नित्य-गतत्वम्
तुङ्गे धामनि नित्य मतित्वम् ॥

२२१

कथन-कला-सुख-लालित्यम्
योग-सुखाऽऽसन अस्खालित्यम् ।
सात्विक-शाक-प्रिय-भोजित्वम्
तात्विक-चर्चा-सह-भागित्वम् ॥

२२२

जन-सामान्ये दत्त-मतित्वम्
स्थापित-सर्व-स्वाऽऽत्मरतित्वम् ।
तत्व-विशुद्धौ कृति-दातृत्वम्
जीवन-शुद्धौ पथचारित्वम् ॥

२२३

यादव-भूधर-सान्निध्यम्
माधवमनु-सुख-सान्निध्यम् ।
यतिराट्-प्राप्तावति-त्वरितत्वम्
गतिरस्माकं मतिरिह सत्वम् ॥

२२४

वरवर-मुनि-गतमेतत् सर्वम्
भज ! भो ! मानस ! त्यज तव गर्वम् ।
हरिपदमेतत् प्रथमसुपर्वम्
गुरुपदमेतच्चरम सुपर्वम् ॥

काव्योपसंहारः

२२५

"टी. टी. शर्मा" समकुरुत तदा सिंहवद् गर्जनं वै
गान्धीकाले सुभगसुमहत्-पर्वकाले प्रकाले ।

श्रावं श्रावं सुहितवचने "विश्वकर्णाट पत्रे"
भावे भावे हृदि समभवद् देशभक्तिः स्वबाल्ये॥

२२६

चतुर्भाषा-प्रवीणः सः चतुर्मुख इवाऽऽगतः ।
अस्मद्ग्रामं सुवाणाऽऽढ्या 'राजाम्बा'सहित स्तदा,

२२७

गान्धीभावान् श्रुतिनिहिततमान भक्तिभावानु-
रूपान्
कुर्वे कुर्वे सकलसुभगान् ग्रन्थरूपेण चाऽऽहम् ।
दत्ते यत् तत्सविधवचने किञ्चिदाविर्बभूव,
षड्विंशस्याऽप्यमितकरुणा पञ्चविंशे प्रसन्ना ॥

२२८

मासोपवासस्य तपःफलाङ्गं
प्राच्यप्रतीच्य-द्वय-सत्प्रसङ्गम् ।
नवं पुराणं मिलितैकसङ्गम्
काव्यं स्वयं स्फूर्तमिदन्तरङ्गम् ॥

२२९

"गान्धी शताब्द्यां," "कलिवेङ्कटस्य"
तथा जयन्त्यां "गुरुवेङ्कटस्य ।
भ्रातुर्जयन्त्यां "तिरुवेङ्कटस्य"
समर्पिता स्वाऽनुभव-त्रिवेणी ॥

२३०

सुजीवनोज्जीवन-पानपावनी
निसर्गघाटीष्वनुसृत्य चारिणी ।
सर्वोदय श्री-सुविचार-चिन्तनी
कैङ्कर्यभक्त्या गुरुणा प्रशोभिनी ॥

२३१

नानालङ्कार-राहित्यं यत् तदेवास्त्यलङ्कृतिः ।
भावभारार्थराहित्यं यत्तदेवाऽमला कृतिः ॥

२३२

उद्विग्न-रस-राहित्यं
शुद्धीकरण-कारणम् ।
वैराग्यराग-रासिक्यम्
ऋद्धिशान्ति-प्रकाशकम् ॥

२३२

समुद्भूतमिदं काव्यं सन्दर्भौचित्य-सूचकम् ।
विश्व-दृष्टि-सुपूतं स्वान् मानवाऽऽर्जव-साधकम् ॥

२३४

त्रिपादं पीठमित्येव कथ्यते तु, तथाऽपि च ।
त्रिपादैरेव तन्न स्यात्, फलकं त्रितय-सङ्ग्रहम् ॥

२३५

तद्वत् त्रिवेणी न स्याद्धि
केवलं कृति-धी-प्रियैः ।
तस्माच्चतुर्थ आयातः
सर्गोऽयं दुर्गमार्थकः ॥

२३६

त्र्यक्षरः प्रणवः प्रोक्तः त्रिमात्रो न त्वसौ भवेत् ।
अर्धाधिक-त्रिमात्रोहि, हा ! ऽर्धं जानाति कः
पुमान् ? ॥

२३७

"ताम्रपर्णी-प्रसादोऽयं" ज्ञेयोप्यज्ञेय एव च ।
सर्वेभ्यः साधनेभ्यश्च विलक्षण इतीर्यते ॥

२३८

वल्लीकमुकचूर्णानां त्रितयेऽप्यन्य-रक्तिमा ।
स्वानुभूतित्रिवेण्यां च तथैवाऽन्यद् विराजते ॥

२३९

जगतः सर्वधर्मेषु गुरु-कारुण्यमेव हि
गुरुथानं तु पूज्यं स्यात् सर्वेतर-विलक्षणम् ॥

२४०

देशकालानवच्छिन्नः गुरुरेव गुरुर्मतः।
विश्वानुमोदनं यत्र स एवाऽत्र विचिन्तितः॥

२४१

जीवनोज्जीवने भेदः नास्त्येव गुरुसम्मतः।
परस्परं सुसम्बद्धे जीवनोज्जीवने स्वयम्॥

२४२

शुद्धेन जीवनेनैव चोज्जीवनमवाप्नुयात्।
उज्जीवनस्य पन्थानं नोपेक्षेत सुजीवनम्

२४२

"अशुद्ध-जीवनेनाऽपि तूज्जीवनमिदं भवेत्"
एवमस्ति मतिश्चैषा तत्र तत्र जनेषु हि॥

२४४

उज्जीवनस्य मार्गश्च
भिन्नएव प्रपद्यते।
जीवनस्य तु मार्गोऽपि
भिन्न एव निगद्यते॥

२४५

अन्यत्व भिन्नत्वमिदं न चाऽस्ति
ब्रह्मत्वमेवाऽविरतं चकास्ति।
बद्धस्य भावेऽपि हरिर्हि सेव्यः
मुक्तस्य भावेऽपि हरिः प्रसेव्यः॥

२४६-२४७

सेवैव सेवाऽविरताऽस्तु मे सा
त्विहाऽपि सेवा परतोऽपि सेवा।
इह प्रसेवा यदि सेव्यते या
परत्र सेवाऽपि हि सिद्ध्यते सा॥
सर्व-प्रसेवा यदि न क्रियेत हा!
परत्र सेवाऽपि न सात्म्यतां गता।
यथाक्रतु-न्यायममुं सुसंस्मर
सेवा-विमुक्त्योस्त्यज भेदमोहिनीम्॥

२४८

गोदाम्बा शठजिन्मुखा यतिवराः नैवात्यजन् सेवनं
भक्तानां सकलाऽऽत्मनां भवभयप्रध्वंसने तत्-पराः।
तस्मादेव त एवमाहुरनिशं "देवान् महान्तोऽधिकाः
सेव्या अत्र परत्र चाऽपि," तदिदं सूक्ष्मं मुमुक्षोः फलम्॥

२४९

धावस्व यत्रा ऽस्ति दरिद्रता भृशं
धावस्व यत्राऽस्ति भयं च भीषणम्।
धावस्व यत्राऽस्ति जन-प्रमर्दनं
धावस्व यत्रैव सुसौहृदं न हि॥

२५०

प्रधाव्यतां यत्र विसंमतिर्जने।
प्रसाध्यतां तत्र सुसंमतिर्जने।
प्रधाव्यतां यत्र कुचिन्तनानि हा
प्रसाध्यतां तत्र सुचिन्तनाबलम्॥

२५१

सर्वेऽपि दद्युस्तव संमतिं चेत्,
"तत्राऽस्ति मत्कार्यमितीह सम्यक्।
सर्वाऽ विरोधेन समस्त- सेवा,
सर्वा च सेवा न मदीय सेवा॥

२५२-२५३

तत्रार्प्यतां जीवन -कौशलं सखे!
दारिद्र्य-भीति-प्रविमर्दनादिभिः।
युध्यस्व युध्यस्व सुशान्तभावना-
बलेन सर्वान् परिसेवितुं क्षमः॥
सेवया फलमित्येषा भ्रान्तिरस्ति महीतले।
सेवैव फलमित्येषा क्रान्तिरस्तु हृदिस्थले॥

२५४

सेवाऽभावात् सेवनं यद्यपीदं
शस्येतापि, प्रोज्वलत्येव चाऽऽद्दौ ।
तत्राऽपि स्यात् स्वार्थभावस्तदर्थे
निःस्वार्था सा जप्यते सर्वयोगे ॥

२५५

पारार्थ्यं स्यात्, तावता नाऽपि मन्ये
तां तां सेवां शुद्ध-भावामितीह ।
साकं साकं स्वार्थता चाऽपि चेत् तां
धिक् तां धिक् तामेकगा स्यात् प्रसेवा

२५६

कृत्वा सेवां स्वीयरस्यां यदि त्वं
मन्येथा यां, सा वृथा भस्महोमः ।
कर्णं दत्वा श्रूयतां, सेवकानां
सेवाऽऽनन्दोऽप्यर्प्यतामर्प्यतां सः ॥

२५७

एवं भूयात् स्वामिसङ्कल्पतो हि
नो नः किञ्चाप्यस्तु तत् स्वार्थभूतम् ।'
निष्कर्षोऽयं देवसेवापराणां
अद्वैतोथं सर्वमेतत् तदर्थम् !

२५८

भौतावस्थासेवनं यद्यपीदं
भक्तेः कार्यं रस्यते सर्वपुंसाम् ।
मुक्तावस्थासेवनं ज्ञानकार्यं,
दिव्याद् देहादेकधा वा, द्विधा वा ॥

२५९

भावे भावे भिद्यतां, दाससेवा
तादात्म्यं वा ब्रह्म निर्वाणमेव !
अंशांशित्वं, यो यथा भावयेत
तत्तत् सर्वं राजते सर्वराजे !

२६०

सर्वाऽवस्था सेवनं सर्वदेशे
सर्वं कालं सर्वसेवासमत्वात् ।
स्पर्धाऽभावाद् यद् यदेवाऽस्ति येषां
तेषां सर्वं "सर्वनारायणाय" !

अविद्या निवृत्या स्वरूपप्रकाशः
यथावा यथावा भवत्येव यस्मिन्
तथावा तथावा महत्येव तस्मिन्
स्थिता हा सदा हा समत्वे परस्मिन्

इति तिरुनारायणपुरम् अरैयर् दासस्य कृतिषु
"स्वानुभूतित्रिवेणी" नामकजीवनोज्जीवनकाव्ये
ताम्रपर्णी प्रसादनामकः चतुर्थः सर्गः

## केचन गुरुकुल ग्रन्थाः

अलङ्कार शास्त्रे तीक्ष्णां विमर्शशक्तिं द्रष्टुं, संपादयितुं च, जग्गू-वेंकटाचार्याणां पंडित-रत्नानां

चन्द्रिकाचकोर

नामकं महाग्रन्थरत्नं पठत

मौल्यम् १५ रूप्यकाणि

संत आल्वाराणां चरितानि भक्ति शैलीश्च परिचेतुकामैः

अवश्यं पठनीयम्, तेषामेव जग्गु स्वामिनां सुंदर संस्कृत गद्यशैली भूषितं

दिव्य सूरि चरितम्

एतयोः पुस्तकयोः प्राप्तिस्थानम् जग्गू- सुदर्शनाचार्यः पो- मेलुकोटे -जिल्ला मंड्या, कर्णाटक.

संस्कृत सरल शैली, अनुबुभूषवश्चेत्, पठत

१ श्री-कृष्ण कथा रहस्यम

२ काव्यकल्पं च

जग्गू-शिं... ...चार्यैः, सोमेश्वर एक्स्टेनषन, पो-तुमकूर-कर्णाटक

महाकवि संविधान चातुर्यं परिचिचीर्षवश्चेत् पठत ।

१ अद्भुतांशुक नाम नाटकम्

२ अद्भुतदूतं च जग्गू वकुल भूषणः पो मेलुकोटे वया मंड्या, कर्णाटक

## अरैयर दासस्य अन्याः कृतयः

१ "विनोबा ज्ञानदेवचिन्तनका" याः संस्कृत पद्यानुवादः

२ श्री रामानुजवचनसारः

३ द्राविड द्वादशाऽऽळवाराणां चतुःसहस्र दिव्यप्रबंधानुवादः (क्वचित् क्वचित्, संस्कृते, हिन्द्यां, समग्रः कर्णाटभाषायांग)

४ सप्तशती संस्कृतकाव्यम्, (यदुशैलनाथशतकचतुष्टयेन रामनाथशतकेन, ब्रह्मोत्सव शतकेनचालङ्कृतम् )

५ दिव्यकाव्यम् ( अभयभीमांसादि २७ विविध विषयान्वितम्)

६ अस्मच्चम्पूः ( अरैयर श्रीरामशर्मणा न्यायवेदान्तालङ्कारेण निर्मिता

इत्याद्याः

(अष्टमं पुटादनुवृत्तम्) शुद्धीकरणम्

| | | |
|---|---|---|
| ९१ | ९७ | श्री |
| ९२ | ११२ | श्रुति |
| ९४ | १३७ | स्वार्थस्या... च्चयावय |
| ,, | ,, | |
| ,, | १३९ | चित्रार्पित |
| ९९ | १९६ | प्रातिकूल्याद्, दूरवान् |
| १०० | २०९ | जामातृ |
| १०३ | २२६ | सुवीणा... |
| १०४ | २७७ | अद्वैतोत्थं |

विण्या

GU... CORPORATION

...AD-380022.

Achievement thereof-

100%Nationalised undertaking of Rural Services.

| Sr. No. | Details. | Position as on last day of the financial year. 31.3.1961 | 31.3.1978 |
|---|---|---|---|
| (1) | No. of Routes. | 1774 | 8858 |
| (2) | Effective Kms. operated per day (in Lacs) | 2.00 | 11.85 |
| (3) | No. of Vehicles held. | 1797 | 5671 |
| (4) | No. of Passangers travelled per day (in Lacs). | 4.01 | [illegible] |
| (5) | Direct services provided to- | | |
| | (A) No. of Villages (Percentage) | – | 74 3 |
| | (B) Population (Percentage). | – | 92.[illegible] |
| (6) | No. of Bus Stations. | 91 | [illegible] |
| (7) | No. of Pickup sheds. | 290 | 1387 |
| (8) | No. of places where water arrangement is made | – | 959 |
| (9) | No. of Divisions. | 7 | 14 |
| (10) | No. of Depots. | 76 | 109 |
| (11) | No. of Refreshment Rooms | 120 | 241 |
| (12) | No of Cloak Room | 10 | 71 |

Printed-at Ramananda press, Ahmedabad, First Edition 1000 Copies.